# SUBHASHITA RATNAKARA,

## A COLLECTION OF WITTY AND EPIGRAMMATIC SAYINGS IN SANSKRIT

COMPILED AND EDITED WITH EXPLANATORY NOTES,

BY

KRISHNA SHASTRI BHATAVADEKAR,

Fourth Edition, Revised and Enlarged

*BY*

*UDHAV SHASTREE AINAPURE.*

"Some books are to be tasted, others to be swallowed, and some to be chewed and digested: that is, some books are to be read only in parts; others to be read, but not curiously; and some few to be read wholly, and with diligence and attention. Some books also may be read by deputy, and extracts made of them by others."—*Lord Bacon.*

Bombay:

GOPAL NARAYEN & Co;
Booksellers & Publishers,
Kalkadavi Road.

1913.

PRICE TWO RUPEES.



श्रीः

# सुभाषितरत्नाकरः ।

नानाविधसुभाषितग्रन्थाधारेण

विद्वज्जनमनोविनोदाय

धुण्डिराजसूरिसूनुना भाटवडेकराभिधेन

कृष्णशास्त्रिणा

संकलितः ।

ऐनापुरेउपाख्यबाळाचार्यात्मजोद्धवाचार्येण

परिशोधितः ।

॥ सुभाषितेन गीतेन युवतीनां च लीलया ॥
॥ मनो न भिद्यते यस्य स योगी ह्यथ वा पशुः ॥ १ ॥

चतुर्थं संस्करणम् ॥

प्रकाशितोयम्

मुम्बय्यां

' गोपाळ नारायण कम्पनी बुकसेलर्स '

इत्याख्यजनतया

शकाब्दाः १८३५ खिस्ताब्दाः १९१३

# PREFACE.

If there is a language on the surface of the earth, dead or living, which may preeminently deserve, by its compressibility of thought, richness of expression, and euphony of words, to be entitled the Language of Poets, it is undoubtedly Sanskrit. The Sanskrit writers cultivated poetry to such an extent, that every work, whether on the philosophy of the soul, or on the composition of a cement, on a battle deciding the fate of the country for a thousand years to come and shedding the blood of millions of human beings, or on the prosaic sacrifice of an animal offered to appease the hungry demons or the reluctant gods, came to be written in verse. Logic and Grammar no less than the art and science of medicine, were thought worthy of being written in verse. Shortness and capability of being easily committed to memory were the chief objects in preferring verse to prose as regards the subjects for which poetry as such had no sympathy. But real poetry was by no means neglected and among other kinds, epigrammatic poetry received special attention The Panchatantra is full of short epigrams on all possible topics relating to humanity viewed in all possible aspects. Thousands of couplets and stanzas embodying in the most laconic style the choicest thoughts of serious as well as humorous minds, are floating on the surface of what is called learned conversation among our country-men, and a man is not considered learned, and perhaps rightly, unless he is able to repeat some celebrated saying of a poet or a dramatist illustrating either side of a question that may form the subject of conversation in which he is taking part. And though very few of these popular sayings can be verified as the productions of known authors, they are nevertheless greedily learnt by heart by the generality of shastris, and may be heard repeated by them in the course of their conversation. As they are very generally used among the well informed and well read of the passing generation of shastris, they may freely be described as containing a faithful reflection of the modes of thought and of the sentiments of the Indian mind busy in a civilization that is now in a state of transition.Not infrequently these epigrammatic pieces serve as authorities

with the ignorant classes, to whom everything written in the sacred tongue has the authority of the shastras.

It is trusted that what is said above will be sufficient excuse for placing before the public the following collection of *Subhashitas*. The collection is arranged under various heads and sometimes sayings both praising and censuring a custom or a state of things are separately given. It is one of the characteristics of the Subhashita poetry that coming as it does from various hands, it is both one sided and exhaustive—one sided when viewed only in parts, and exhaustive when viewed as a whole. The reader will doubtless remember the satakas of Bhartrihari, who writing in praise of the pleasures of the company of young women will raise them to the highest heaven; but speaking of indifference to the pleasures of the world will almost in the same breath send his angels to the lowest depth of bottomless perdition. The same may be said of the epigrammatic verses of the Panchatantra, the interlocutors in which are never at a loss to support their conflicting views by authoritative verses either quoted from old writers or composed for the occasion by the author. Both sides of every subject touched by the Subhasitas are well, some-times perhaps too well, illustrated and the truth always lies between the extremes.

So far as possible the verses have been referred in the Index to their sources, and it is hoped the Index will also prove useful in other respects.

# प्रस्तावना ।

स्मृत्वेश्वरं बहुविधान् ग्रन्थानालोच्य यत्नतः ।
सुभाषितानां पद्यानां संग्रहःक्रियतेऽधुना ॥ १ ॥
भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती ।
तत्रापि काव्यं मधुरं तत्रापि च सुभाषितम् ॥ २ ॥

प्राचीनैः कविभिः कृताः सुवचना ग्रन्था अनेके भुवि
सर्वेषां परिशीलनं न घटते कार्यानुरोधादतः ।
तेभ्यः संप्रति सागरादिव सुधामुद्धृत्य सारं मया
न्यस्तं सुज्ञजनाग्रतो हि रसिका गृह्णन्तु चैतन्मुदा ॥ ३ ॥

न नवीनं प्राक्सिद्धं युष्माकं दत्तमेव युष्मभ्यम् ।
भाण्डारस्थं भृत्यो यथानृपायाऽर्पयत्यलंकारम् ॥ ४ ॥

निर्माति नो यद्यपि मालिको वै नवानि पुष्पाणि मनोहराणि ।
करोति मालां प्रविचित्य तानि स साधुताया भवतीह पात्रम् ॥ ५ ॥

खिन्नत्वेऽपि सुभाषितं खलु मनः श्रोतुं पुनर्वाञ्छति ।
अज्ञान् ज्ञानवतोऽप्यनेन हि वशीकर्तुं समर्थो भवेत्
कर्तव्यो हि सुभाषितस्य मनुजैरावश्यकः संग्रहः ॥ ६ ॥

अस्मिन् भारते वर्षे पुरा खलु वेदशास्त्रपुराणेतिहासादिविविधविद्यासंपन्ना बहवो विद्वांसोऽभूवन् । तत्समये भोजविक्रमाद्यो विद्यागुणग्राहिणो महीपालाः स्वयशःशुभ्रांशुकौमुदीधवलितदिक्चक्रवाला आसन् । ते च तान् विदुषो दानमानसत्कारैर्यथोचितं पूजयांचक्रुः । एवमाश्रयबलेनोत्तेजिताः कालिदासभवभूतिजगन्नाथप्रभृतयः कवयः स्वबुद्धिकौशलेन गीर्वाणवाण्या सुरसकाव्यनाटकचम्पूभाणादीन् गद्यपद्यग्रथितानतीवमनोहरान् ग्रन्थान् व्यदधुः । परं तु तदर्वाक् कंचित्कालपर्यन्तं वेदादिविद्यापठनपाठनादिसंप्रदायस्यातिकार्श्येन सकलगी-

र्वाणविद्यामार्तण्डोऽस्तंगत इवासीत् ।

अधुना चेदं भारतवर्षमङ्गलसताकं जातं ! तेपि नानाविद्याविशारदाः सन्ति । तैरिदानीं सर्वदेशेषु प्रतिनगरं प्रतिग्रामं पठनपाठनक्रमप्रवृत्तये पाठशाला अपि स्थापिताः एतद्देशीयानां जनाना कल्याणं विधित्सुना महोदारेण एल्फिन्स्तनाख्येन हूणेन गीर्वाणविद्याविवृद्धये पुण्याख्यपत्तने संस्कृतपाठशाला स्थापिता । तस्यां बहूनि विद्वद्रत्नानि समुत्पन्नानि । सापीदानीं मस्मद्दैवदुर्विलसितेन विलयं गता ।

किंच सांप्रतं संपादिताभिनवविविधेङ्गलण्डीयविज्ञानाः संस्कृतविद्याकृतपरिश्रमाः केचित्तरुणपुरुषाः स्वबुद्धिवैभवेन प्राचीनपण्डितानप्यतिक्रमितुमीहन्ते । तेपि सुभाषितमभिलषन्ति । अतःसर्वेषां विदुषामविदुषां च मनोरञ्जनाय किमपि कृत्यं विधेयमिति कतिपयवर्षपर्यन्तं मनसि ग्रन्थविधित्सा संजाता । परंतु नवीनव्याकरणापेक्षया प्राचीनसत्कविरचितपद्यानां संग्रहस्त्वतीव सहृदयहृदयाल्हादकः स्यादिति विचिन्त्य गोडबोलोपाह्वपरशुरामसंकलितनवनीताभिधमहाराष्ट्रपद्यसंग्रह इवायमपि संग्रहः सर्वग्राह्यो भवेदिति कल्पितम् ।

प्रस्तुतग्रन्थरचनासाधनीभूतग्रन्थमालां श्लोकनिबद्धामग्रतो वक्ष्यामि यथा—

शार्ङ्गधरः कल्पतरुःपद्यानां च तरङ्गिणी ।
प्रसंगरत्नावलिका प्रसंगाभरणं तथा ॥ १ ॥
सभातरङ्गो भामिन्या विलासः सूक्तिसंग्रहः ।
रचितं भर्तृहरिणा श्लोकानां च शतत्रयम् ॥ २ ॥
महाकाव्यानि साहित्यसारो रसिकजीवनम् ।
गोवर्धनकृता सप्तशती कर्णामृतं तथा ॥ ३ ॥

वेणीसंहरणं चाऽभिज्ञानशाकुन्तलं तथा ।
उत्तररामचरितं त्रोटकं विक्रमोर्वशी ॥ ४ ॥
धनंजयस्य व्यायोगोऽनर्घराघव एव च ।
पञ्चायुधप्रपञ्चाख्यो वसन्ततिलकाभिधः ॥ ५ ॥
मुकुन्दानन्दभाणश्च लटकानां च मेलनम् ।
तथा विश्वगुणादर्शो विद्वन्मुखमण्डनम् ॥ ६ ॥
काव्यादर्शः कुवलयानन्दो विद्वद्विभूषणम् ।
जिनधर्मविवेकश्च काव्यसंग्रह एव च ॥ ७ ॥
शार्मण्यदेशप्रथिताः संहिता इन्दिशस्मुखे ।
हितोपदेशो हनुमन्नाटकं कलिविडम्बनम् ॥ ८ ॥
तथा चाऽन्ये स्फुटश्लोका यत्र कुत्रापि च श्रुताः ।
ग्रन्थानेतान्समाहृत्य प्रथितः सूक्तिसागरः ॥ ९ ॥
सारं गृहीतं यत्नेन विद्वज्जनमनोहरम् ।
आस्वादयन्तु रसिकाः सावकाशं यथेप्सितम् ॥ १० ॥
नानाविधैः प्रकरणैर्ग्रथितश्चैष संग्रहः ।
तद्यथा स्वेष्टदेवानां मङ्गलाचरणं ततः ॥ ११ ॥
सज्जनप्रशंसा च दुर्जनानां विकत्थनम् ।
तथा विद्वत्प्रशंसा च मूर्खनिन्देति च क्रमात् ॥ १२ ॥
तथा चान्तर्लापिका च बहिर्लापिका ततः ।
क्रियाकारकगुप्तादि कूटमन्योक्तिसंग्रहः ॥ १३ ॥
शृङ्गारवीरकरुणाऽद्भुतहास्यादयो रसाः ।
तेषां नवानामन्ते च वैराग्यस्य निरूपणम् ॥ १४ ॥
प्रोक्तान्यत्र समासेन मुख्यप्रकरणानि वै ।
आख्या रत्नाकर इति सुभाषितपदादिमा ॥ १५ ॥
लोकेऽयं यातु विख्यातिं यावत्तिष्ठति मेदिनी ।

एतत्पुस्तकमुद्रणीपत्रपरिशोधनकार्यमङ्गीकुर्वद्भिः खाडिलकरोपाह्वयैरपाशास्त्रिभिर्ममोपरि बहूपकृतं तत्कियदिति वक्तुं न पारये । तथा च मास्तर आफ आर्तेत्युपपदधारिणा संस्कृताभिज्ञेन तैलङ्गोपाह्वयेन काशीनाथाभिधेन परिश्रमःकृतोऽतस्तस्यापि बलवदुपकारगौरवं बिभर्मि ।

शके १७२१ प्रजापतिसंवत्सरे फाल्गुनो मासः ।

कृष्णशर्मा ।

एवं परिश्रमतयाऽन्यग्रन्थावलोकनेन श्रीकृष्णशास्त्रिभिः संकलितोयं सुभाषितरत्नाकरः पुनरन्याभिः सूक्तिभिः सह पुनः संस्कारांय गोपालनारायणजनताद्वारा दत्तोऽमां यथामति यथा स्थानं तत्पद्यानि संगृह्य संशोधितः । तत्र कुत्रचिन्मानुषिकनिसर्गजन्यदृष्ट्यादिदोषतः शिष्टा दोषा भवेयुस्तत्र क्षमन्तामार्या इति प्रार्थये ।

भोजप्रबन्धः प्रबोधसुधाकराभिधः स्फुटाः ।
वासवदत्तादिग्रन्थाश्च नूत्नऽसंग्रहमूलकाः ॥

उद्धवाचार्यः ।

# अनुक्रमणिका ।



| प्रकरणम् | पृष्ठम् |
|---|---|

इति

# सूचीपत्रम् ।



### आ.

ध.

## ष.



## स.

---

॥ श्रीः ॥

# सुभाषितप्रशंसा ।

॥ श्रीगणेशं वन्दे ॥



सुभाषितेन गीतेन युवतीनां च लीलया ॥
मनो न भिद्यते यस्य स योगी ह्यथवा पशुः ॥ १ ॥
सुभाषितमयद्रव्यसंग्रहं न करोति यः ॥
प्रस्तावयज्ञे संप्राप्ते कां प्रदास्यति दक्षिणाम् ॥ २ ॥
संसारकटुवृक्षस्य द्वे फले ह्यमृतोपमे ॥
सुभाषितरसास्वादः सङ्गतिः सुजने जने ॥ ३ ॥
सुभाषितरसास्वादजातरोमाञ्चकंचुकाः ॥
विनापि कामिनीसङ्गं कवयः सुखमासते ॥ ४ ॥
प्रस्तावे हेतुयुक्तानि यः पठत्यविशङ्कितः ॥
स कविस्तानि काव्यानि काव्ये तस्य परिश्रमः ॥५॥
पृथिव्यां त्रीणि रत्नानि जलमन्नं सुभाषितम् ॥
मूढैः पाषाणखण्डेषु रत्नसंज्ञा विधीयते ॥ ६ ॥
यस्य वक्त्रकुहरे[1] सुभाषितं नास्ति नाप्यवसरे प्रजल्पति ॥
आगतः सदसि धीमतामसौ लेप्य[2]निर्मित इवावभासते ॥७॥
धर्मो यशो नयो दाक्ष्यं मनोहारि सुभाषितम् ॥
इत्यादिगुणरत्नानां संग्रही नावसीदति ॥ ८ ॥
बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः ॥
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम् ॥ ९ ॥
प्रसन्नाः[3] कान्तिहारिण्यो[4] नानाश्लेष[5]विचक्षणाः ॥
भवन्ति कस्य चित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥ १० ॥

---

१ कुहरे बिले २ लेप्यः पंकस्तेन निर्मितो रचितः ३ प्रसन्नाः प्रसन्नवदनाः पक्षे उत्तानार्थाः ४ कान्त्या शोभया मनोहारिण्यः पक्षे भाषणगुणेन मनोहारिण्यः ५ नानाश्ले० आश्लेषः आलिङ्गनं पक्षे श्लेषः

नायं प्रयाति विकृतिं[1] विरसो न यः स्या-
न्न क्षीयते बहुजनैर्नितरां निपीतः ॥
जाड्यं[2] निहन्ति रुचिमेति करोति तृप्तिं
नूनं सुभाषितरसो ऽन्यरसातिशायी[3] ॥ ११ ॥

कथमिह मनुष्यजन्मा संप्रविशति सदसि विबुधगमितायाम्[4] ॥
येन न सुभाषितामृतमास्वादितमाननान्तमातृप्तेः ॥ १२ ॥

द्राक्षा म्लानमुखी जाता शर्करा चाश्मतां गता ॥
सुभाषितरसास्वादात्सुधा भीता दिवं गता ॥ १३ ॥

॥ इति सुभाषितप्रशंसा ॥

---

१ विकृतिं विकारम् । २ जाड्यं मान्द्यम् । ३ अन्यर० अन्यरसान् अतिशेते अतिक्रम्य वर्तते । ४ विबुध० पण्डितपूर्णायाम् । अथवा पण्डितैः कृतागमनायाम् ५ आकण्ठम् ।

# अथ मङ्गलाचरणानि ।

## तत्रादौ विघ्नहरत्वाद्गणेशवन्दनम् ।

अगजाननपद्मार्कं[1] गजाननमहर्निशम् ॥
अनेकदं[2] तं भक्तानामेकदन्तमुपास्महे[3] ॥ १ ॥
आलम्बे जगदालम्बे हेरम्बचरणाम्बुजे ॥
शुष्यन्ति यद्रजःस्पर्शात्सद्यः प्रत्यूहवार्धयः[4] ॥ २ ॥
तमाखुपत्रं[5] राजेन्द्र भज माज्ञानदायकम्[6] ॥
तमाखुपत्रं राजेन्द्र भज माऽज्ञानदायकम् ॥ ३ ॥

आनन्दमात्रमकरन्दमनन्तगन्धं
योगीन्द्रसुस्थिरमिलिन्दमपास्तबन्धम् ।
वेदान्तसूर्यकिरणैकविकासशीलं
हेरम्बपादशरदम्बुजमानतोऽस्मि ॥ ४ ॥

शिवयोः सुधाहरिद्रादीप्तिमतोः सारभृज्जगत्पित्रोः ।
त्रिभुवनविघ्नध्वंसी करिकल्पःकश्चिदरुणिमा जयति ॥ ५ ॥
युगपत्स्वगण्डचुम्बनलोलौ पितरौ निरीक्ष्य हेरम्बः ।
तन्मुखमेलनकुतुकी स्वाननमपनीय परिहसन्पायात् ॥ ६ ॥
उच्चैर्ब्रह्माण्डपिण्डाद्वितयसहचरं कुम्भयुग्मं दधानः
प्रेङ्खन्नागारिपक्षप्रतिभटविकटश्रोत्रतालाभिरामः ।
देवः शंभोरपत्यं भुजगपतितनुस्पर्धिवर्धिष्णुहस्तं-
स्त्रैलोक्याश्चर्यमूर्तिः स जयति जगतामीश्वरःकुञ्जरास्यः ॥ ७ ॥

---

१ अगजा पार्वती तस्या आननं मुखं तदेव पद्मं कमलं तस्याल्हादकत्वात्सूर्यः। २ अनेकदं मोक्षाद्यनेकवस्तुदातारम् । ३ एकदन्तं गणेशम् ४ प्रत्यूहवार्धयः विघ्नसमुद्राः । ५ आखुपत्रं आखुर्मूषकः पत्रं वाहनं यस्य । ६ मा लक्ष्मीः उत्तमार्थे अज्ञानदायकं तमाखुपत्रं मा भजेति । ८ सुधा चूर्णम् । ९ करिकल्पः करितुल्यः । १० लोलौ तृष्णौ ।११सहचरं तुल्यम् ।१२प्रतिभटं प्रतिस्पर्धि ।१३हस्तः शुण्डादण्डः ।

सानन्दं नन्दिहस्ताहतमुरज[1]रवाहूतकौमारबर्हि[2]-
त्रासान्नासाग्ररन्ध्रं विशति फणिपतौ भोगसंकोचभाजि ।
गण्डोड्डीनालिमालामुखरितककुभस्ताण्डवे[3] शूलपाणे-
र्वैनायक्यश्चिरं वो वदन[4]विधुतयः पान्तु चीत्कारवत्यः ॥८॥

सोमं[5] तु सवितारं[6] यत्कृतवांस्त्वं दयालय ।
गजानन न किं मन्दं[7] मां कर्तुं क्षमसे कविम्[8] ॥ ९ ॥

## शिवः ।

श्रीः ॥ पाणिग्रहे[9] पुलकितं[10] वपुरैशं भूतिभूषितं[11] जयति ।
अंकुरित इव मनोभूर्[12] यस्मिन् भस्मावशेषोऽपि ॥ १ ॥

पार्वतीफणिबालेन्दुभस्ममन्दाकिनीयुता ।
पवर्गरचिता मूर्तिरपवर्ग[13]प्रदायिनी ॥ २ ॥

जातो जड[14]प्रसङ्गाद्विस्मारयति भ्रमो[15]ऽयमात्मानम् ।
शुभमधुनार्द्र[16]रसेन च सुरसंसेव्यं[17] भजस्व चण्डीशम्[18] ॥३॥

वामाङ्गीकृतवामाङ्गि[19] कुण्डलीकृतकुण्डलि[20] ।
आविरस्तु पुरोवस्तु भूतिभूत्यम्बराम्बरम्[21] ॥ ४ ॥

कस्त्वं शूली[22] मृगय भिषजं नीलकण्ठः[23] प्रियेऽहं
केकामेकां[24] कुरु पशुपतिर्नैव दृष्टे विषाणे ॥

---

१ मुरजः मृदङ्गः । २ बर्ही मयूरः । ३ ताण्डवे नृत्ये । ४ वद० वदनकम्पनानि । ५ सोमं साम्बम् पक्षे चन्द्रम् । ६ सवितारं पितरं पक्षे सूर्यम् ७ मन्दं शनैश्चरं पक्षे मूढम् । ८ कविं शुक्रं पक्षे मनीषिणम् । ९ परिणये । १० संजातपुलकम् । ११ भूत्या भस्मना शोभितम् । १२ मदनः १३ अपवर्गो मोक्षः । १४ जडं विभ्रम पक्षे डलयोः सावर्ण्यात् जलप्रसङ्गात् । १५ भ्रमः रज्जौ सर्पभ्रान्तिः पक्षे चक्रारूढस्येवावस्था । १६ भक्तिरसेन पक्षे शृंगबेररसेन । १७ सुरैः देवैः संसेव्यः पक्षे सुरसं शोभनरसं सेव्यं सेवनार्हम् । १८ उमापतिं पक्षे चण्डीशनामानं रसम् । १९ स्त्री । २० सर्पः । २१ दिगम्बरम् । २२ त्रिशूली पक्षे शूलरोगवान् । २३ नीलकण्ठः पक्षे मयूरः । २४ मयूरवाणीम् ।

[1]स्थाणुर्मुग्धे न वदति तरुर्जीवितेशः शिवायाः
गच्छाटव्यामिति हतवचाः पातु वश्चन्द्रचूडः ॥ ५ ॥

केयं मूर्धन्यन्धकारे तिमिरमिह कुतः सुभ्रु कान्तेन्दुयुक्ते
कान्ताप्यत्रास्ति काचिन्ननु भवतु मया पृष्टमेतावदेव ।
नाहं द्वन्द्वं करोमीत्यपनय शिरसस्तूर्णमेनामिदानी-
मित्थं प्रोक्तो भवान्या प्रतिवचनजितः पातु वश्चन्द्रचूडः ॥ ६ ॥

गवीशपत्रो[2] नगजार्तिहारी[3] कुमारतातः[4] शशिखण्डमौलिः[5] ॥
लङ्केश[6]संपूजितपादपद्मः पायादनादिः[7] परमेश्वरो[8] नः ॥ ७ ॥

द्विजराजशेखरो[9] यद्वृषभारूढः सदा सदारस्त्वम्[10] ॥
चक्रे हर तद्विधिना पुनरुपनयनं ललाटघटितं ते[11] ॥ ८ ॥

कृष्णः ।

श्रीः ॥ देवः पायात् पयसि विमले[12] यामुने मज्जतीनां[13]
याचन्तीनामनुनयपदैर्वञ्चितान्यंशुकानि ॥
लज्जालोलैरलसवलितैरुन्मिषत्पक्ष्मवाणै-
र्गोपस्त्रीणां नयनकुसुमैरञ्चितः केशवो नः ॥ १ ॥

सम्पन्न रमणी [14]शीलसम्पन्नरमणीं विना ॥
इत्यूढवान्नरमणी रमणीं रुक्मिणीं हरिः ॥ २ ॥

---

१ कोष्ठी । २ गवीशो वृषः पत्रं वाहनं यस्य पक्षे वीशो गरुडः । ३ नगजा पार्वती तस्या दुःखनाशकः पक्षे गजेन्द्रपीडानाशकः । ४ कार्तिकेयपिता पक्षे मारो मदनस्तत्पिता । ५ शशिखण्डो मौलौ यस्य पक्षे शिखण्डमौलिः । ६ लंकेशो रावणः पक्षे को ब्रह्मा, ईशः शिवः । ७ न विद्यते आदिर्यस्य स अनादिः पक्षे आद्यक्षरशून्यः यथा वीशपत्रः गजार्तिहारीइत्यादि । ८ परमेश्वरः शिवः रमेश्वरः विष्णुः । ९ द्विजराजश्चन्द्रः भूषणं यस्य, पक्षे ब्राह्मणश्रेष्ठः । १० सदारः सस्त्रीकः । ११ पुनर्मौञ्जीबन्धनम् पक्षे द्वयोर्नयनयोः समीपवर्ति तृतीयं नेत्रम् । १२ निर्मले । १३ स्नानं कुर्वतीनाम् । १४ शीलसम्पन्नरमणीं विना सम्पत् रमणी नास्ति इति हेतोः ।

भवान् हि भगवानेव [1]गतो भेदः परस्परम् ॥
[2]महत्यागदयायुक्तः [3]सत्यभामासमन्वितः ॥ ३ ॥

[4]अवेमव्यापाराकलनम[5]तुरीस्पर्शमचिरा-
दनुन्मीलत्तन्तुप्रकरघटनायासमसकृत् ॥
विषीदत्पाञ्चालीविपदपनयैकप्रणयिनः
पटानां निर्माणं पतगपतिकेतोरवतु नः ॥ ४ ॥

भ्रमयति [6]भवपित्तं चेद्भज भज नर [7]सूतशेखरं [8]कृष्णम् ॥
[9]सद्गोरसेन [10]सहंसितम[11]नु[12]त्रुटिकं सर्वथा त्यज स्नेहम् ॥ ५ ॥
[13]अन्धंतमश्चेदयि बाधते त्वां सरोजनेत्रं जगदेकसूत्रम् ॥
सुधाचरित्रं परमं पवित्रं कुरुष्व मित्रं वसुदेवपुत्रम् ॥ ६ ॥
द्वाविह दृष्टौ सृष्टौ दुस्तरसंसृतितरङ्गिणीतरणे ॥
[14]उडुपकुलपतिः कृष्णः श्रीरामस्त[15]रणिकुलपतिश्चान्यः ॥ ७ ॥

मेघैर्मेदुरमम्बरं वनभुवः श्यामास्तमालद्रुमै-
र्नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय ॥
इत्थं नन्दनिदेशतश्चलितयोः प्रत्यध्वकुञ्जद्रुमं
राधामाधवयोर्जयन्ति यमुनाकूले रहः केलयः ॥ ८ ॥

---

१ गकारेण भेदः । २ महती या गदा तया युक्तः पक्षे महः उत्सवः त्यागो दानं दया करुणा एतैर्युक्तः । ३ सत्यभामया समन्वितः पक्षे सत्यं सूनृतं भा कांतिः मा लक्ष्मीः आभिः सम्यग्युक्तः । ४ वेमा प्राकृते 'धोटें' इत्युच्यते तद्व्यापाररहितम् । ५ तुरी प्रा० 'तुरई' इत्युच्यते तत्स्पर्शं विना । ६ भवः संसारः स एव पित्त भ्रमोत्पादकत्वात् । ७ सूतेषु शेखरं श्रेष्ठं पक्षे सूतशेखरनामानं रसम् पित्तशामको हि सूतशेखर इति प्रसिद्धिः । ८ कृष्णं कृष्णनामानं देवं पक्षे वर्णतः कृष्णम् । ९ सतां या गीर्वाणी तस्या रसो ब्रह्मानन्दरूपो रसस्तेन, पक्षे सम्यग्गोदुग्धेन । १० हसितेन सहितम् पक्षे सशर्करम् । ११ अनुक्षणं पक्षे त्रुटिरेला तद्युक्तम् । १२ पुत्रधनादिलोभम्, पक्षे तैलादिकं पित्तजनकत्वात् । १३ अन्धंतमः नरकः पक्षे गाढान्धकारः । १४ उडुपो नक्षत्रनाथः स कुलपतिर्यस्य पक्षे उडुपान्यल्पनावः तासां कुलं समूहस्तत्पतिः । १५ तरणिः सूर्यः पक्षे नौः ।

पुञ्जीभूतं प्रेम गोपाङ्गनानां मूर्तीभूतं भागधेयं यदूनाम्।
एकीभूतं गुप्तचित्तं श्रुतीनां श्यामीभूतं ब्रह्म मे सन्निधत्ताम्॥९॥
परमिममुपदेशमाद्रियध्वं निगमवनेषु नितान्तखेदखिन्नाः।
विचिनुत भवनेषु बल्लवीनामुपनिषदर्थमुलूखले निबद्धम्॥१०॥
नवनीलमेघरुचिरः परः पुमानवनीमवाप्य[1] धृतगोपविग्रहः[2]।
नवनीयकीर्तिरमरैरपि स्वयं नवनीतभिक्षुरधुना स चिन्त्यते॥११॥
खिन्नोसि मुञ्च शैलं विभृमो वयमिति वदत्सु शिथिलभुजः।
भरभुग्नविनतबाहुषु गोपेषु हसन् हरिर्जयति॥१२॥
दर्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः।
आत्मन्येवानुरक्तो वः शिवं दिशतु केशवः॥१३॥
हृदयं कौस्तुभोद्भासि हरेः पुष्णातु वः श्रियम्।
राधाप्रवेशरोधाय दत्तमुद्रमिव श्रिया॥१४॥
रामो[3] नाम बभूव हुं तदबला सीतेति हुं तौ पितु-
र्वाचा पञ्चवटीवने निवसतस्तामाहरद्रावणः।
कृष्णेनेति पुरातनीं निजकथामाकर्ण्य मात्रेरिताम्
सौमित्रे क्व धनुर्धनुर्धनुरिति प्रोक्ता गिरः पान्तु वः॥१५॥
पीठे पीठनिषण्णबालकगले तिष्ठन्सगोपालको
यन्त्रान्तः[4]स्थितदुग्धभाण्डमवभिद्याच्छाद्य घण्टारवम्।
वक्त्रोपान्तकृताञ्जलिः कृतशिरःकम्पं पिबन् यः पयः
पायादागतगोपिकानयनयोर्गण्डूषफूत्कारकृत्॥१६॥
कस्त्वं कृष्णमवेहि मां किमिह ते मन्मन्दिराशङ्कया
युक्तं तन्नवनीतभाजनपुटे न्यस्तः किमर्थं करः।
कर्तुं तत्र पिपीलिकापनयनं सुप्ताः किमुद्बोधिता
बाला वत्सगतिं विवेक्तुमिति संजल्पन् हरिः पातु वः॥१७॥

---

१ पृथ्वीम्। २ देहः। ३ यथा माता स्वपुत्रप्रस्वापनाय प्राचीनाः कथाः कथयति तथा यशोदाऽपि राम इति कश्चिद्राजा आसीदिति वदति स्म तत् श्रुत्वा कृष्णोऽपि हुंकारं दत्तवान्। ४ शिक्यम्।

राधा पुनातु जगदच्युतदत्तचित्ता
मन्थानमाकलयती दधिरिक्तपात्रे ।
तस्याः स्तनस्तबकचूचुकलोलदृष्टि-
र्देवोपि दोहनधिया वृषभं दुदोह ॥ १८ ॥

अंगुल्या कः कपाटं प्रहरति कुटिले माधवः[1] किं वसन्तो
नो चक्री[2] किं कुलालो नहि धरणिधरः[3] किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी[4] किमुत खगपतिर्[5]नो हरिः[6] किं कपीन्द्र
इत्येवं सत्यभामाप्रतिवचनजितः पातु वश्चक्रपाणिः ॥ १९ ॥

माधव रन्धनसमये मा रव मुरलीमहो रहोरसिकाम
विरसतरू रसतरतां यद् कृशतरतां कृशानुराधत्ते ।
गोपाल इति कृष्ण त्वं प्रचुरक्षीरवाञ्छया
श्रितो मातुः स्तनक्षीरमप्यलब्धं कृतं त्वया ॥ २० ॥

## गौरी ।

श्रीः ॥ प्रत्यासन्न[7]विवाहमङ्गलविधौ देवार्चनव्यग्रया
दृष्ट्वाग्रे परिणेतुरे[8]व लिखितां गङ्गाधरस्याकृतिम् ।
उन्माद[9]स्मितरोषलज्जितधिया गौर्या कथंचिच्चिरा-
द्वृद्धस्त्रीवचनात्प्रिये विनिहितः पुष्पाञ्जलिः पातु वः ॥ १ ॥

वक्षःपीठे निरीक्ष्य स्फटिकमणिशिलामण्डले स्वच्छभासि
स्वच्छायां[10] साभ्यसूया[11] त्वमियमिति मुहुः सत्यमाश्वासिताऽपि ।
वामे मे दक्षिणेऽस्याः श्रवसि[12] कुवलयं नाहमित्यालपन्ती
दत्ताऽऽश्लेषा सहासं मदनविजयिना पार्वती वः पुनातु ॥ २ ॥

खेदस्ते कथमीदृशः प्रियतमे त्वन्नेत्रवन्हेर्विभो
कस्माद्वेपितमेतदिन्दुवदने भोगीन्द्रभीतेस्तव ।

---

१ वसन्तो लक्ष्मीपतिश्च । २ कुलालो विष्णुश्च । ३ शेषो विष्णुश्च । ४ सर्पः । ५ गरुडः । ६ कपीन्द्रो विष्णुश्च । ७ समीपवर्ती । ८ भर्तुः । ९ चित्तविभ्रमः । १० स्वप्रतिबिम्बम् । ११ सेर्ष्या । १२ कर्णे ।

रोमाञ्चैः[1] कथमेष देव भगवन् गङ्गाम्भसां सीकरै-
रित्थं भर्तरि भाव[2]गोपनपरा गौरी चिरं पातु वः ॥ ३ ॥

भिक्षुः क्वास्ति बलेर्मखे पशुपतिः किं नास्त्यसौ गोकुले
मुग्धे पन्नगभूषणः सखि सदा शेते च तस्योपरि ।
आर्ये मुञ्च विषा[3]दमाशु कमले नाहं प्रकृत्या चला[4]
चेत्थं वै गिरिजासमुद्रसुतयोः संभाषणं पातु वः ॥ ४ ॥

हरकण्ठग्रहानन्दमीलिताक्षीं नमाम्युमाम् ।
कालकूटस्य संस्पर्शाज्जातमूर्छागमामिव ॥ ५ ॥

उदारांस्त्वदृते नान्यान् प्रपश्याम्ययि पार्वति ।
श्रीरामभक्तिमाणिक्यमदेयमपि देहि मे ॥ ६ ॥

विद्राणे रुद्रवृन्दे सवितरि तरले वज्रिणि ध्वस्तवज्रे
जाताशङ्के शशाङ्के विरमति मरुति त्यक्तवैरे कुबेरे ।
वैकुण्ठे कुण्ठितास्त्रे महिषमतिरुषं पौरुषोपघ्ननिघ्नं
निर्विघ्नं निघ्नती वः शमयतु दुरितं भूरिभावा भवानी ॥ ७ ॥

पार्वतीमोषधीमेकामपर्णां मृगयामहे ।
शूली हालाहलं पीत्वा यया मृत्युंजयोऽभवत् ॥ ८ ॥

## लक्ष्मीः ।

श्रीः ॥ पायात्पयोधिदुहितुः कपोलामलचन्द्रमाः ।
यत्र संक्रान्तबिम्बेन हरिणा हरिणायितम् ॥ १ ॥

---

१ सात्त्विकाविर्भावसूचकं रोमहर्षणम् । २ स्वाभिप्रायगोपनपरा । ३ खेदम् पक्षे विषमत्तीतिविषादस्तम् । ४ चञ्चला । ५ ओः शिवस्य शरान् भार्याम् पक्षे उदारान् औदार्यशीलान् । ६ पलायिते । ७ पौरुषोपघ्नः पराक्रमाश्रयो महिषो निघ्नं आयत्तो यस्मिन् कर्मणि, यद्वा पौरुषोपघ्नानां पराक्रमिणां निघ्न आयत्तस्तमिति महिषविशेषणम् । ८ प्रभूतप्रभावा । ९ पर्वतसम्बन्धिनीम्, पर्वतपुत्रीं च । १० पर्णरहिताम्, एतन्नाम्नीं च । ११ शूलरोगवान् त्रिशूलधारी च । १२ मृत्युनाशक एतन्नाम्ना प्रसिद्धश्च । १३ हरिण इवाचरितम् ।

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिङ्ग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥२॥

कमलासनकमलेक्षणकमलारिकिरीटकमलभृद्वाहैः ।
नुतपदकमला कमला करधृतकमला करोतु मे कमलम् ॥३॥

## सरस्वती ।

श्रीः ॥ शारदा शारदाम्भोजवदना वदनाम्बुजे ।
सर्वदा[1] सर्वदाऽस्माकं सन्निधिं[2] सन्निधिं क्रियात् ॥ १ ॥

करबदरसदृशमखिलं भुवनतलं यत्प्रसादतः कवयः ॥
पश्यन्ति सूक्ष्ममतयः[3] सा जयति सरस्वती देवी ॥ २ ॥

## श्रीरामचन्द्रः ।

श्रीः ॥ श्रान्तोसि चेत्संसृति[4]तीव्रतापतः
सीतान्वितं[5] मारुतपोतसेवितम्[6] ।
पलाशिसंघातविवृद्धविक्रमं[7]
रामं धृताकारमुपेहि[8] सत्वरम् ॥ १ ॥

यातायातैः सुबहुभिः श्रान्तोसि यदि हे सखे ।
एकं गुरुघनच्छायं[9] सीतारामपदं[10] भज ॥ २ ॥

---

१ सर्वदात्री । २ उत्तमनिधिरूपम् । ३ कुशाग्रबुद्धयः । ४ संसारः । ५ जानकीसहितम् पक्षे सीतया लांगलपद्धत्या युक्तम् । ६ हनूमता सेवितम् पक्षे मन्दवायुना सेवितम् । ७ पलाशिनो राक्षसास्तेषां संघातेन मारणेन विवृद्धो विक्रमो यस्य पक्षे पलाशिनो वृक्षास्तेषां समूहेन । ८ गृहीतावतारम् पक्षे धृतः आकारो येन तं आरामभित्यर्थः । गुरुरिव घनो मेघस्तस्य छाया यस्मिन्, पक्षे गुर्वी महती घना निबिडा छाया यस्मिन् । १० सीतासहितस्य रामस्य पदं पक्षे सीतं शीतलं यदा रामपदं उपवनस्थानम् ।

राकारोच्चारमात्रेण मुखान्निर्याति पातकम् ॥
पुनः प्रवेशसन्देहान्मकारस्तत्कपाटवत् ॥ ३ ॥
अखामास तृणं प्रियाद्रुहि तृणामास स्मरारेर्धनु-
र्दारामास मुनेः शिलाऽपि नृवरामास स्वयं पादुका ।
कुल्यामास महार्णवोऽपि कपयो योधाम्बभूवुस्तदा
पौलस्त्यो मशकाम्बभूव भगवंस्त्वं मानुषामासिथ ॥ ४ ॥

नालीकभङ्गकृदतीव नदीनबन्धु-
र्नक्षत्रपो नवसुधाविभवैकहेतुः ।
राजा किमिन्दुरपि नार्यभिमानहारी
राजा परं जयति राघवसार्वभौमः ॥ ५ ॥

कान्तं श्रीरघुतिलकं सर्वजगत्पालकं विहाय जनः ।
अनुसरति नरं कान्तं नानाकष्टाश्रयं शिव शिवाय ॥ ६ ॥

## महाजनप्रशंसा ।

श्रीः ॥ सौजन्याऽमृतसिन्धवः परहितप्रारब्धवीरव्रता
वाचालाः परवर्णने निजगुणाऽऽलापे च मौनव्रताः ।
आपत्स्वप्यविलुप्तवीर्यनिचयाः संपत्स्वनुत्सेकिनो
मा भूवन् खलवक्त्रनिर्गतविषज्वालातताः सज्जनाः ॥ १ ॥

मुखेन नोद्गिरत्यूर्ध्वं हृदयान्नाऽऽनयत्यधः ।
जरयत्यन्तरे साधुर्दोषं विषमिवेश्वरः ॥ २ ॥

विकृतिं नैव गच्छन्ति सङ्गदोषेण साधवः ।
आवेष्टितं महासर्पैश्चन्दनं न विषायते ॥ ३ ॥

---

१ अलीकभङ्गकृत् पक्षे कमलविकासकृत् । २ अनाथबन्धुः पक्षे नदीनः समुद्र-स्तद्बन्धुः । ३ क्षत्रियश्रेष्ठः पक्षे नक्षत्रनायकः । ४ वसुधैश्वर्यस्य कारणम् पक्षे नवीनाया सुधाया यो विभवस्तस्य मुख्यकारणम् । ५ शत्रुमानहारी, पक्षे नारीणां मानहारकः ६ रमणीयं पक्षे ककारान्तम् । ७ रमणीयं पक्षे ककारोन्ते यस्य तादृशं नरं नरकमित्यर्थः । ८ सुजनामृतसमुद्राः । ९ विपत्तिकालेषु । १० गर्वरहिताः । ११ [illegible]
१२ जीर्णं करोति ।

सुजनो न याति वैरं परहितकार्ये विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति[1] मुखं कुठारस्य[2] ॥ ४ ॥

मज्जन्तोऽपि विपत्पयोधि[3]गहने निःशङ्कधैर्याऽऽवृताः
कुर्वन्त्येव परोपकारमनिशं सन्तो यथाशक्ति वै ।
राहोरुग्रकराल[4]वक्त्रकुहरग्रासाभिभूतोऽप्यलं
चन्द्रः किं न जनं करोति सुखिनं ग्रासाऽवशेषैः करैः[5] ॥५॥

धवलयति समग्रं चन्द्रमा जीवलोकं
किमिति निजकलङ्कं नात्मसंस्थं प्रमार्ष्टि[6] ।
भवति विदितमेतत्प्रायशः सज्जनानां
परहितनिरतानामादारो नाऽऽत्मकार्ये ॥ ६ ॥

अहो महत्त्वं महतामपूर्वं[7] विपत्तिकालेऽपि परोपकारः ।
यथाऽऽस्यमध्ये[8] पतितोऽपि राहोः कलानिधिः पुण्यचयं ददाति ७

उपकर्तुं प्रियं कर्तुं कर्तुं स्नेहमकृत्रिमम्[9][10] ।
सज्जनानां स्वभावोऽयं केनेन्दुः शीतलीकृतः ॥ ८ ॥

मान्या एव हि मान्यानां मानं कुर्वन्ति नेतरे ।
शम्भुर्बिभर्ति मूर्ध्नेन्दुं स्वर्भानुस्[11]तं जिघृक्षति[12] ॥ ९ ॥

ये जाते व्यसने[13] निराकुल[14]धियः संपत्सु नाऽभ्युन्नताः
प्राप्ते नैव पराङ्मुखाः प्रणयिनि प्राणप्रयोगैरपि ।
ह्रीमन्तः[15] स्वगुणप्रकाशनविधावन्यस्तुतौ पण्डिता-
स्ते भूमण्डलमण्डनैकतिलकाः सन्तः कियन्तो जनाः॥१०॥

ये दीनेषु दयालवः स्पृशति यानल्पोऽपि न श्रीगदो
व्यग्रा ये च परोपकारकरणे हृष्यन्ति[16] ये याचिताः ।

---

१ सुगन्धयति । २ परशोः । ३ विपदेव पयोधिः समुद्रः । ४ करालं भयंकरं । ५ किरणैः । ६ शोधयति, नाशयतीत्यर्थः । ७ अलौकिकम् । ८ मुखमध्ये । ९ कृत्रिमम् १० निष्कपटम् । ११ राहुः । १२ ग्रहीतुमिच्छति । १३ संकटे । १४ अव्यग्रमनसः । १५ लज्जावन्तः । १६ हर्षयुक्ता भवन्ति ।

स्वस्थाः सन्ति च यौवनोन्मदमहाव्याधिप्रकोपेऽपि ये
तैः स्तम्भैरिव सुस्थिरैः किल भराक्रान्ता धरा धार्यते ॥ ११ ॥

संपदि यस्य न हर्षो विपदि विषादो रणे च धीरत्वम् ।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १२ ॥

शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते वदति न साधुः करोत्येव ॥ १३ ॥

गवादीनां पयोऽन्येद्युः सद्यो वा जायते दधि ।
क्षीरोदधेस्तु नाद्यापि महतां विकृतिः कुतः ॥ १४ ॥

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
नहि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनि ॥ १५ ॥

सुजनं व्यंजनं मन्ये चारुवंशसमुद्भवम् ।
आत्मानं च परिभ्राम्य परतापनिवारणम् ॥ १६ ॥

इहानेके सन्तः सततमुपकारिण्युपकृतिं
कृतज्ञाः कुर्वन्तो जगति निवसन्तोऽपि सुधियः ।
कियन्तस्ते सन्तः सुकृतपरिपाकप्रणयिनो
विना स्वार्थं येषां भवति परकृत्यव्यसनिता ॥ १७ ॥

अर्थः सुखं कीर्तिरपीह मा भूदनर्थ एवाऽस्तु तथाऽपि धीराः ।
निजप्रतिज्ञामनुरुध्यमाना महोद्यमाः कर्म समारभन्ते ॥ १८ ॥

अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ।
उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ॥ १९ ॥

आदिमध्यनिधनेषु सौहृदं सज्जने भवति नेतरज्जने ।
छेदतापननिघर्षताडनैर्नान्यभावमुपयाति काञ्चनम् ॥ २० ॥

क्षुद्राः सन्ति सहस्रशः स्वभरणव्यापारमात्रोद्यताः

---

१ पृथ्वी । २ मेघः । ३ शरदृतौ । ४ अन्यस्मिन् दिवसे । ५ विकारः । ६ प्राणिषु । ७ चन्द्रकान्तिम् । ८ चाण्डालगृहे । ९ 'विजनं' इति पाठः । १० वेणुः कुलं च । ११ दुर्लभे । १२ विक्रमिण । १३ सुवर्णम् । १४ नीचाः ।

स्वार्थो यस्य परार्थ एव स पुमानेकः सतामग्रणीः[1]
दुष्पूरोदरपूरणाय पिबति स्रोतःपतिं[2] वाडवो[3]
जीमूतस्तु[4] निदाघ[5]संभृतजगत्संतापविच्छित्तये ॥ २१ ॥

नहि भवति वियोगः स्नेहविच्छेदहेतु-
र्जगति गुणनिधीनां सज्जनानां कदाचित् ।
घन[6]तिमिरनिबद्धो दूरसंस्थोऽपि चन्द्रः
किमु कुमुदवनानां प्रेमभङ्गं करोति ॥ २२ ॥

उदधिरवधि[7]रुर्व्यास्तं हनूमांस्ततार[8]
निरवधि गगनं चेत्काण्डकोशे विलीनम् ।
इति परिमितिमन्तो भान्ति सर्वेऽपि भावाः
स तु निरवधिरेकः सज्जनानां विवेकः ॥ २३ ॥

चन्द्रः क्षयी प्रकृतिवक्रतनु[9]र्जडात्मा[10]
दोषा[11]ऽऽकरः स्फुरति मित्रविपत्तिकाले[12] ।
मूर्ध्ना तथापि विधृतः परमेश्वरेण[13]
नैवाऽऽश्रितेषु महतां गुणदोषशङ्का ॥ २४ ॥

उदये सविता रक्तो रक्तश्चाऽस्तमये तथा ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ २५ ॥

दृश्यन्ते भुवि भूरिनिम्बतरवः कुत्राऽपि ते चन्दनाः
पाषाणैःपरिपूरिता वसुमती वज्रो[14] मणिर्दुर्लभः ॥
श्रूयन्ते करटा[15]ऽऽरवाः प्रतिदिनं चैत्रे कुहू[16]कूजितं

---

१ अग्रेसरः । २ समुद्रम् । ३ वडवाग्निः । ४ मेघः । ५ ग्रीष्मः । ६ गाढान्धकारः । ७ मर्यादा । ८ तीर्णवान् । ९ प्रकृत्या स्वभावेन वक्रा तनुर्यस्य । १० जडस्वभावः डलयोः सावर्ण्यात् जलात्मा जलरूपः । ११ दोषा रात्रिस्तस्याः करः पक्षे दोषाणां आकरः खनिरिति यावत् । १२ मित्रः सूर्यः तस्य विपत्तिकालः अस्तकालस्तस्मिन् पक्षे मित्रं सुहृत् तद्विपत्तिकालः । १३ महादेवेन, पक्षे केनचित्स्वामिना । १४ हीरकमणिः । १५ काकशब्दा । १६ कोकिलशब्दः ।

तन्मध्ये खलसंकुलं जगदिदं द्वित्राः क्षितौ सज्जनाः॥ २६ ॥

इक्षोरग्रात्क्रमशः पर्वणि पर्वणि यथा रसविशेषः ।
तद्वत्सज्जनमैत्री विपरीतानां च विपरीता ॥ २७ ॥

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महाऽऽरभाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ २८ ॥

पिबन्ति नद्यः स्वयमेव नाऽम्भः स्वयं न खादन्ति फलानि वृक्षाः।
नादन्ति सस्यं[1] खलु वारिवाहाः[2] परोपकाराय सतां विभूतयः[3]॥२९॥

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो विस्मयपदम्[4] ।
महामेघः क्षारं पिबति कुरुते वारि मधुरं
फणी[5] क्षीरं पीत्वा वमति गरलं दुःसहतरम् ॥ ३० ॥

संपदो महतामेव महतामेव चाऽऽपदः ।
वर्धते क्षीयते चन्द्रो न तु तारागणः क्वचित् ॥ ३१ ॥

किं जन्मना च महता पितृपौरुषेण
शक्त्या हि याति निजया पुरुषः प्रतिष्ठाम् ।
कुम्भा न कूपमपि शोषयितुं समर्थाः
कुम्भोद्भवेन[6] मुनिनाऽम्बुधिरेव पीतः ॥ ३२ ॥

महतां सद्व्ययेनैव विपत्तिरपि शोभते ।
दन्तभङ्गो हि नागानां श्लाघ्यो[7] गिरि[8]विदारणे ॥ ३३ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो[9]
ज्ञानस्योपशमः[10] कुलस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा बलवतां धर्मस्य निर्व्याजता[11]
सर्वेषामपि सर्वकारणमिदं [12]शीलं परं भूषणम् ॥ ३४ ॥

---

१ धान्यम् । २ मेघाः । ३ ऐश्वर्याणि । ४ आश्चर्यस्थानं । ५ सर्पः । ६ अगस्त्येन । ७ स्तुत्यः । ८ पर्वतः । ९ नियमनम् । १० शान्तिः । ११ कपटराहित्यम् । १२ स्वभावः ।

अनुकुरुतः[1] खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः[2]
विदधाति[3] रन्ध्रमेको गुणवानन्यस्तु[4] पिदधाति[5] ॥३५॥
दाक्षिण्यं[6] स्वजने दया परजने[7] शाठ्यं सदा दुर्जने
नीतिः साधुजने नयो[9] नृपजने विद्वज्जनेष्वार्जवम्[8] ।
शौर्यं शत्रुजने क्षमा गुरुजने नारीजने धूर्तता
ये चैवं पुरुषाः कलासु कुशलास्तेष्वेव लोकस्थितिः॥३६॥
केनाञ्जितानि नयनानि मृगाङ्गनानां
को वा करोति रुचिराऽङ्गरुहान्[10]मयूरान् ।
कश्चोत्पलेषु दलसंनिचयं करोति
को वा करोति विनयं कुलजेषु पुंसु ॥ ३७ ॥
आरभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तमजना न परित्यजन्ति ॥ ३८ ॥
प्रिया न्याय्या[11] वृत्तिर्[12]मलिनमसु[13]भङ्गे[14]प्यसुकरं
त्वसन्तो नाभ्यर्थ्याः[15] सुहृदपि न याच्यः कृशधनः[16] ॥
विपद्युच्चैः स्थेयं पदमनु[17]विधेयं च महतां
सतां केनोद्दिष्टं[18] विषम[19]मसिधारा[20]व्रतमिदम् ॥ ३९ ॥
प्रदानं प्रच्छन्नं[21] गृहमुपगते संभ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं नाप्युपकृतेः[22] ।
अनुत्सेको लक्ष्म्यां निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ ४० ॥

---

१ अनुकरणं कुरुतः । २ प्राकृते ' सुई ' इत्युच्यते । ३ उत्पादयति । ४ गुणस्तन्तुः पक्षे सुशीलत्वादिः । ५ आच्छादयति । ६ औदार्यम् । ७ अन्यजने । ८ अनृजुत्वम् । ९ विनयः । १० लोमानि । ११ न्यायादनपेता । १२ वर्तनम् । १३ दुष्कृतम् । १४ प्राणनाशेऽपि । १५ न याचनीयाः १६ स्वल्पधनः । १७ अनुसरणीयम् १८ उपदिष्टम् १९ अतिकठिनम् २० खड्गधाराताडनम् । २१ गुप्तम् । २२ उपकारस्य ।

घृष्टं घृष्टं पुनरपि पुनश्चन्दनं चारुगन्धं
छिन्नं छिन्नं पुनरपि पुनः स्वादु चैवेक्षुकाण्डम् ।
दग्धं दग्धं पुनरपि पुनः काञ्चनं कान्तवर्णं
न प्राणान्ते प्रकृतिविकृतिर्जायते चोत्तमानाम् ॥ ४१ ॥

दुर्जनवचनाङ्गारैर्दग्धोऽपि न विप्रियं[1] वदत्यार्यः ।
अगुरुरपि दह्यमानः स्वभावगन्धं परित्यजति किं नु ॥४२॥

सत्सङ्गाद्भवति हि साधुता खलानां
साधूनां नहि खलसङ्गमात्खलत्वम् ।
आमोदं[2] कुसुमभवं मृदेव धत्ते
मृद्गन्धं नहि कुसुमानि धारयन्ति ॥ ४३ ॥

अप्रियवचनदरिद्रैः प्रियवचनाढ्यैः स्वदारपरितुष्टैः ।
परपरिवादनिवृत्तैः क्वचित्क्वचिन्मण्डिता[4] वसुधा ॥४४॥

असाधुः साधुर्वा भवति खलु जात्यैव पुरुषो
न सङ्गाद्दौर्जन्यं नहि सुजनता कस्य चिदपि ।
प्ररूढे संसर्गे[5] मणिभुजगयोर्[6] जन्मजनिते
मणिर्नाऽहेर्दोषान्[3] स्पृशति नहि सर्पो मणिगुणान् ॥४५॥

वनेऽपि सिंहा मृगमांसभक्षिणो बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता[7] न नीचकर्माणि समाचरन्ति॥ ४६ ॥

कान्ताकटाक्षविशिखा[8] न लुनन्ति[9] यस्य
चित्तं न निर्दहति कोपकृशानुतापः[10] ।
कर्षन्ति भूरिविषयांश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं[11] स धीरः ॥ ४७ ॥

पतितोऽपि राहुवदने तरणिर्बोधयति[12] पद्मखण्डानि ।

---

१ अनिष्टम् २ सुगन्धम् ३ दूषणम् ४ शोभिता ५ संबन्धे ६ सर्पस्य ७ संकटग्रस्ताः ८ कटाक्षा एव विशिखाः बाणाः ९ न छिन्दन्ति १० कोपः क्रोधः स एव कृशानुरग्निस्तत्तापः ११ समग्रम् १२ विकासयति ।

भवति विपद्यपि महतामङ्गीकृतवस्तुनिर्वाहः ॥ ४८ ॥

दाता न दापयति दापयिता न दत्ते
यो दानदापनपरो मधुरं न वक्ति ।
दानं च दापनमथो मधुरा च वाणी
त्रीण्यप्यमूनि खलु सत्पुरुषे वसन्ति ॥ ४९ ॥

मलयाचलगन्धेन त्विन्धनं चन्दनायते ।
तथा सज्जनसङ्गेन दुर्जनः सज्जनायते ॥ ५० ॥

हृदयानि सतामेव कठिनानीति मे मतिः ।
खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥ ५१ ॥

वक्त्रे वल्गाप्रकर्षः समरभुवि तव प्राणरक्षाऽपि दैवा-
त्स्वेच्छाचारो नचाऽऽस्ते नहि भवति तथा भारवाहो नितान्तम् ।
इत्युक्तोऽश्वः खरेण प्रहसितवदनो मूक एवाऽवतस्थे
तस्माज्ज्ञात्या महान्तोऽधमजनविषये मौनमेवाश्रयन्ति ॥ ५२ ॥

अञ्जलिस्थानि पुष्पाणि वासयन्ति करद्वयम् ।
अहो सुमनसां प्रीतिर्वामदक्षिणयोः समा ॥ ५३ ॥

माभूत्सज्जनयोगो यदि योगो मा पुनः स्नेहः ।
स्नेहो यदि विरहो मा यदि विरहो जीविताऽऽशा का ॥ ५४ ॥

प्रेमैव माऽस्तु यदि चेत्पथिकेन सार्धं
तेनाऽपि चेद्गुणवता न समं कदाचित् ।
तेनाऽपि चेद्भवतु माऽस्तु कदापि भङ्गो
भङ्गोऽपि चेद्भवतु वश्यमवश्यमायुः ॥ ५५ ॥

कुम्भः परिमितमम्भः पिबत्यसौ कुम्भसंभवोऽम्भोधिम् ।
अतिरिच्यते सुजन्मा कश्चिज्जनकान्निजेन चरितेन ॥ ५६ ॥

तुङ्गात्मनास्तुङ्गतराः समर्था मनोरथान्पूरयितुं न नीचाः ।

---

१ किञ्चिदपि २ 'लगाम' इति लोके ३ संग्रामांगणे ४ सह ५ विचार्य ६ अगस्त्यः ७ अधिको भवति ८ पितुः ९ आचरणेन १० उच्चमनसः ।

धाराधरा एव धराधराणां निदाघदाहं शमितुं न नद्यः ॥ ५७ ॥

सद्भिस्तु लीलया प्रोक्तं शिलालिखितमक्षरम् ।
असद्भिः शपथेनापि जले लिखितमक्षरम् ॥ ५८ ॥

प्रथमवयसि दत्तं तोयमल्पं पिबन्तः
शिरसि निहितभारा नारिकेला नराणाम् ।
उदकममृतकल्पं दद्युराजीवितान्तं
नहि कृतमुपकारं साधवो विस्मरन्ति ॥ ५९ ॥

अद्याऽपि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ॥
अम्भोनिधिर्वहति दुःसहवाडवाऽग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ६० ॥

हरेः पदाहतिः श्लाघ्या न श्लाघ्यं खररोहणम् ॥
स्पर्धाऽपि विदुषा युक्ता न युक्ता मूर्खमित्रता ॥ ६१ ॥

विपदि धैर्यमथाऽभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाऽभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ६२ ॥

यत्र विद्वज्जनो नाऽस्ति श्लाघ्यस्तत्राऽल्पधीरपि ।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते ॥ ६३ ॥

गोत्रस्थितिं न मुञ्चन्ति सदा सन्नतिमाश्रिताः ।
उदन्वन्तश्च सन्तश्च महासत्त्वतया तथा ॥ ६४ ॥

साधोः प्रकोपितस्याऽपि मनो नाऽऽयाति विक्रियाम् ।

---

१ शमितुं शमयितुमित्यर्थः 'शमयन्ति नान्ये' इति वा पाठः २ अमृततुल्यम् ३ उज्झ उत्सर्गे. न त्यजति ४ सिंहस्य अश्वस्य वा ५ पादताडनम् ६ उदयकाले ७ वक्तृत्वशक्तिः ८ स्वभावसिद्धम् ९ वृक्षवर्जिते १० कुलमर्यादां पक्षे पर्वतस्थितिम् ११ सन्नमनम् १२ समुद्राः १३ महान्तः सत्त्वाः प्राणिनो येषु ते, पक्षे सत्त्वं धैर्यम् १४ विकारम् ।

नहि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ ६५ ॥

नारिकेलसमाऽऽकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये बदरिकाऽऽकारा बहिरेव मनोहराः ॥ ६६ ॥

स्नेहच्छेदेऽपि साधूनां गुणा नाऽऽयान्ति विक्रियाम् ।
भङ्गेनाऽपि मृणालानामनुबध्नन्ति तन्तवः ॥ ६७ ॥

घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्ताऽऽवलि-
र्न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम् ।
प्रीत्यै सज्जनभाषितं प्रभवति प्रायो यथा चेतसि
सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टि मन्त्रोपमम् ॥ ६८॥

परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम् ।
धर्मे स्वीयमनुष्ठानं कस्यचित्सुमहात्मनः ॥ ६९ ॥

उपचरितव्याः सन्तो यद्यपि कथयन्ति नैकमुपदेशम् ।
यास्तेषां स्वैरकथास्ता एव भवन्ति शास्त्राणि ॥ ७० ॥

वाञ्छा सज्जनसङ्गमे परगुणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम् ।
भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले-
ष्वेते येषु वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः॥ ७१ ॥

करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजति भुजयोर्वीर्यमतुलम् ।
हृदि स्वस्था वृत्तिः श्रुतमधिगतैकव्रतफलं
विनाप्यैश्वर्येण प्रकृतिमहतां मण्डनमिदम् ॥ ७२ ॥

संपत्सु महतां चित्तं भवत्युत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ ७३ ॥

---

१ 'कोलीत' इति लोके २ संबन्धं कुर्वन्ति ३ मुक्तासरः ४ सेव्या ५ स्वैरालापाः ६ स्वस्त्रियां ७ शंकरे ८ मनोजये ९ ज्ञानम् १० निस्तुलम् ११ भूषणम् १२ काठिन्यम् ।

यः प्रीणयेत्सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं य-
देतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ ७४ ॥

नम्रत्वेनोन्नमन्तः परगुणकथनैः स्वान्गुणान्ख्यापयन्तः
स्वार्थान्संपादयन्तो विततबहुतराऽऽरम्भयत्नाः परार्थे ॥
क्षान्त्यैवाक्षेपरूक्षाऽक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तश्चाऽऽश्चर्यचर्या जगति बहुमताः कस्य नाऽभ्यर्चनीयाः ॥ ७५

मनसि वचसि काये पुण्यपीयूषपूर्णा
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणून्पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ ७६ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यत्र श्रिताश्च तरवस्तरवस्त एव ।
मन्यामहे मलयमेव यदाश्रयेण
कङ्कोलनिम्बकुटजा अपि चन्दनाः स्युः ॥ ७७ ॥

अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः।
हेम्नः कठिनस्याऽपि द्रवणोपायोऽस्ति न तृणानाम् ॥ ७८ ॥

पातितोपि कराघातैरुत्पतत्येव कन्दुकः
प्रायेण साधुवृत्तानामस्थायिन्यो विपत्तयः ॥ ७९ ॥

छिन्नोऽपि रोहति तरुश्चन्द्रः क्षीणोऽपिवर्धते लोके ।
इति विमृशन्तः सन्तः सन्तप्यन्ते न लोकेऽस्मिन् ॥ ८० ॥

इयमुन्नतसत्त्वशालिनी-महतां काऽपि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ८१ ॥

नाल्पीयसि निबध्नन्ति पदमुन्नतचेतसः ।

---

१ प्रकटयन्तः २ अमृतम् ३ पंक्तिभिः ४ कणिकाः ५ शोभमाना ६ उदारचेतसः

येषां भुवनलाभेऽपि निःसीमानो मनोरथाः ॥ ८२ ॥

अहो किमपि चित्राणि चरित्राणि महात्मनाम् ।
लक्ष्मीं तृणाय मन्यन्ते तद्भरेण नमन्त्यपि ॥ ८३ ॥

आपत्स्वेव हि महतां शक्तिरभिव्यज्यते न संपत्सु ।
अगुरोस्तथा न गन्धो घ्राणेऽस्ति यथाऽग्निपतितस्य ॥ ८४

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ८५ ॥

तरुमूलादिषु निहितं जलमाविर्भवति पल्लवाऽग्रेषु ।
निभृतं यदुपक्रियते तदपि महान्तो वहन्त्युच्चैः ॥ ८६ ॥

अचिन्त्याः पन्थानः किमपि महतामन्धकरिपो-
र्यदक्ष्णोऽभूत्तेजस्तदकृत कथाशेषमदनम् ।
मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह ।
प्रतेने तेनेदं मदनमयमेव त्रिभुवनम् ॥ ८७ ॥

नूनं दुग्धाब्धिमन्थोत्थाविमौ सुजनदुर्जनौ ।
किं त्विन्दोः सोदरः पूर्वः कालकूटस्य चेतरः ॥ ८८ ॥

उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताऽग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ ८९ ॥

किमत्र चित्रं यत्सन्तः पराऽनुग्रहतत्पराः ।
नहि स्वदेहशैत्याय जायन्ते चन्दनद्रुमाः ॥ ९० ॥

प्राज्ञो हि जल्पतां पुंसां श्रुत्वा वाचः शुभाऽशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाऽम्भसः ॥ ९१ ॥

---

१ लक्ष्मीभरेण २ त्यक्त्वाऽभवन्ति ३ निःशलाके एकान्ते इत्यर्थः ४ शंकरस्य ५ भस्मीकृत ६ वार्तावाशङ्का मदनो यदि नस्तत्तथाविधम् अत्रोत्तरार्धस्य त्रिभुवनमिति विशेष्यं योजनीयम् ७ अत्रेः ।

रिपुः पौलस्त्याख्यश्चरणचरितव्यो जलनिधि-
र्विजेतव्या लंका रणभुवि सहायाश्च कपयः ।
तथाऽप्येको रामः सकलमवधीद्राक्षसकुलं
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ९२ ॥
रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणरहितः सारथिरपि ।
रविर्यात्येवाऽन्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिः सत्त्वे भवति महतां नोपकारणे ॥ ९३ ॥
धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदविजितात्मा हिमकरः ।
तथाप्येकोऽनङ्गस्त्रिभुवनमपि व्याकुलयति
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे ॥ ९४ ॥
अपेक्षन्ते न च स्नेहं न पात्रं न दशान्तरम् ॥
सदालोकहितासक्ता रत्नदीपा इवोत्तमाः ॥ ९५ ॥
किं मधुना किं विधुना किं सुधया किं च वसुधयाऽखिलया ।
यदि हृदयहारिचरितः पुरुषः पुनरेति नयनयोरयनम् ॥ ९६ ॥
काकैः सह प्रवृद्धस्य कोकिलस्य कलां गिरः ।
खलसंगेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ९७ ॥
अम्बरमनूल्लङ्घ्यं वसुन्धरा साऽपि वामनैकपदा ।
अब्धिरपि पोतलङ्घ्यः सतां मनः केन तुल्यं स्यात् ॥ ९८ ॥
आपद्गतः खलु महाशयचक्रवर्ती
विस्तारयत्यकृतपूर्वमुदारभावम् ।
कालागुरुर्दहनमध्यगतः समन्ता-

---

१ रावणः २ अनूरुः अरुणः ३ पुष्पमयम् ४ ज्या ५ भ्रमररूपा ६ मैत्रीम् गताति च ७ योग्यतां भाण्डं च ८ अवस्थान्तरं सूत्रवर्त्तिकां च ९ लोकानां हित तस्मिन्नासक्ताः पक्षे आलोकः प्रकाशः तेन सहितं तस्मिन्नासक्ताः १० अमृतेन ११ स्थानम् १२ अलंकरणभुरा १३ तरणिः नौकानियावत् ।

श्लोकोत्तरं परिमलं प्रकटीकरोति ॥ ९९ ॥

विश्वाऽभिरामगुणगौरवगुम्फितानां
रोषोऽपि निर्मलधियां रमणीय एव ॥
लोकप्रियैः परिमलैः परिपूरितस्य
काश्मीरजस्य कटुतापि नितान्तरम्या ॥ १०० ॥

शून्ये ऽपि च गुणवत्तामातन्वानः स्वकीयगुणजालैः ।
विवराणि मुद्रयन्द्रागूर्णायुरिव सज्जनो जयति ॥ १०१ ॥

प्रदानं प्रच्छन्नं गृहमुपगते संभ्रमविधि-
र्निरुत्सेको लक्ष्म्यामनभिभवगंधाः परकथाः ॥
प्रियं कृत्वा मौनं सदसि कथनं चाऽप्युपकृतेः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥ १०२॥

प्रियप्राया वृत्तिर्विनयमधुरो वाचि नियमः
प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
रहस्यं साधूनामनुपधिविशुद्धं विजयते ॥ १०३ ॥

ये पापं शमयन्ति सङ्गतिभृतां ये दानशृङ्गारिणो
येषां चित्तमतीव निर्मलतरं येषां न भग्नं व्रतम् ।
ये सर्वान्सुखयन्ति हि प्रतिदिनं ते साधवो दुर्लभा
गङ्गावद्गजगण्डवद्गगनवद्गाङ्गेयवद्गेयवत् ॥ १०४ ॥

यथा चित्तं तथा वाचो यथा वाचस्तथा क्रियाः ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ॥ १०५ ॥

विवेकः सह संयत्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिन्हमेतन्महात्मनाम् ॥ १०६ ॥

हितेच्छुना तु कर्तव्यः सतामेव समागमः

---

१ सुन्दरः २ केशरस्य ३ 'कोळी' इति लोके लूता ४ पादभेदत्वेन वाक्य रचनायाः पुनरुक्तिः ५ सत्कुलप्रसूतम् ६ आनन्दात्मिका ७ विनयः ।

सरसानां सुमनसां षट्पदेनेव सर्वदा ॥ १०७ ॥
सद्वृत्तमेव संसेव्यंगुरवो लघवोऽपि च ।
सर्वे वर्णाः समायान्ति सर्वार्थैः श्रुतियोग्यताम् ॥ १०८ ॥
सर्वाभीष्टप्रदो नित्यं सन्मार्गेणैव गच्छताम् ॥
विचित्रमेतद्विद्वांस्तु जङ्गमः कल्पपादपः ॥ १०९ ॥
सतां सङ्गं विना कोपि लभेत्किं वाञ्छितं फलम् ।
नहि सन्तापशान्तिः स्यात्पूर्णचन्द्रोदयं विना ॥ ११० ॥
साधूनां चरणाम्भोजपरागं भगवानपि ।
वाञ्छतीति त एवेह वन्द्याः पद्माकरा इव ॥ १११ ॥

## दुर्जननिन्दा ।

श्रीः ॥ दुर्जनः परिहर्तव्यो विद्ययाऽलंकृतोपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ १ ॥
अहमेव गुरुः सुदारुणानामिति हालाहल मास्म तात दृप्यः[1] ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥२॥
अपूर्वरसना[2] व्यालाः[3] खलाननबिलेशयाः ।
कर्णमूले स्पृशन्त्यन्यं हरन्त्यन्यस्य जीवितम् ॥ ३ ॥
न दुर्जनः सज्जनतामुपैति बहुप्रकारैरपि सेव्यमानः ।
भूयोऽपि सिक्तः पयसा घृतेन न निम्बवृक्षो मधुरत्वमेति॥४॥
खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ॥
आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ५ ॥
खलानां कण्टकानां च द्विविधैव प्रतिक्रिया[4] ।
उपानन्मुखभङ्गो[5] वा दूरतो वा विसर्जनम् ॥ ६ ॥
न विना परवादेन रमते दुर्जनो जनः ॥
काकः सर्वरसान् भुङ्क्ते विनाऽमेध्यं[6] न तृप्यति ॥ ७ ॥

---

१ गर्वोद्धतो मा भव २ जिह्वाः ३ सर्पाः ४ प्रतीकारः ५ उपानहा पादत्रयेण मुखस्य भङ्गः ६ विष्ठाद्यशुचि,

पोतो[1] दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्तौ सृणिः[2] ।
इत्येतद्भुवि नाऽस्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धाताऽपि भग्नोद्यमः[3] ॥ ८ ॥

कर्पूरधूलीरचिताऽऽलवालैः[4] कस्तूरिकाकुंकुमलिप्तदेहः ।
सुवर्णकुम्भैःपरिषिच्यमानो निजं गुणं मुञ्चति किं पलाण्डुः[5]॥९॥

सर्पः क्रूरः खलः क्रूरः सर्पात्क्रूरतरः खलः ।
मंत्रेण शाम्यते सर्पो न खलः शाम्यते कदा ॥ १० ॥

विषधरतोप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः
यदयं नकुलद्वेषी[6] सुकुलद्वेषी पुनः पिशुनः ॥ ११ ॥

सर्वास्तुम्ब्यः[7] समकटुरसास्तुम्बिवल्लीप्रसूता-
स्ताः संबद्धा अपि कतिपया दुस्तरं तारयन्ति ॥
शब्दायन्ते[8] सरसमपराःशुष्ककाष्ठे निषण्णा-
स्तन्मध्येऽन्या ज्वलितहृदयाः शोणितं[9] संवहन्ति ॥१२॥

धातस्तात तवैव दूषणमिदं यन्नाम कस्तूरिका
कान्तारान्तरचारिणां[10] तृणभुजां यन्नाभिमूले कृता ।
यद्येवं पिशुनस्य[11] हन्त रसनामूलेऽकरिष्यस्तदा[12]
प्रा[13]ऽऽयासेन विनाऽभविष्यदतुला कीर्तिश्च निर्दोषता॥१३॥

कस्तूरिकां तृणभुजामटवी[14]चराणां
निक्षिप्त नाभिषु चकार च तान्वधार्हान् ।
मूढो विधिः सकलदुर्जनलोलजिह्वा-
मूले स्म निक्षिपति चेत्सकलोपकारः ॥ १४ ॥

---

१ नौका. २ अंकुशः ३ भग्नप्रयत्नः ४ 'आळें' इतिलोके ५ कन्दर्पः 'कान्दा' इतिप्र. ६ 'मुङ्गुस' इति लोके ७ तुम्बीफलानि. ८ शब्दं कुर्वन्ति. ९ रक्तम्. १० दुर्गममार्गसंचारिणाम् ११ सूचकस्य. १२ जिव्हामूले १३ प्रकृष्टेन यत्नेन १४ वनम्

ते वै सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परोपकारनिरताः स्वार्थाऽविरोधेन ये ॥
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
येतु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥१५॥

यत्रात्मीयो जनो नास्ति भेदस्तत्र न विद्यते ॥
कुठारैर्दण्डनिर्मुक्तैर्भिद्यन्ते तरवः कथम् ॥ १६ ॥

दुर्जनं प्रथमं वन्दे सज्जनं तदनंतरम् ।
मुखप्रक्षालनात्पूर्वं गुदप्रक्षालनं यथा ॥ १७ ॥

दह्यमानाः सुतीक्ष्णेन नीचाः परयशोऽग्निना ।
अशक्तास्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते ॥ १८ ॥

दुर्जनदूषितमनसां पुंसां सुजनेऽप्यविश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १९ ॥

नौश्च दुर्जनजिव्हा च प्रतिकूलविसर्पिणी ॥
परप्रतारणायैव दारुणा केन निर्मिता ॥ २० ॥

दुर्जनं सुजनं कर्तुं नोपकारशतैरपि ॥
अपानं मृत्सहस्रेण धौतं चास्यं कथं भवेत् ॥ २१ ॥

भग्नकुम्भशकलेन वै मलं बालकस्य जननी व्यपोहति ॥
तद्वदोष्ठवदनेन दुर्जनो मातृतः शतगुणाऽधिको भवेत् ॥ २२ ॥

अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः ॥
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥ २३ ॥

जलनिधौ जननं धवलं वपुर्मुररिपोरपि पाणितले स्थितिः ।
इति समस्तगुणान्वित शंख भो कुटिलता हृदये न निवारिता॥२४॥

---

१ परश्वधैः २ फूत्कारं कृत्वा. ३ प्रतितीरं पक्षे विरुद्धम्. ४ परेषां प्रकर्षेण तारणम्. पक्षे वञ्चनं ५ दारुणा भयंकरा. पक्षे दारुणा काष्टेन । ६ न क्वापि शक्नोतीति शेषः ७ भिन्नकलशखण्डेन. ८ अशिरस्कं कलेवरम् ९ कौटिल्यम्.

दुर्जनस्य विशिष्टत्वं परोपद्रवकारिणम् ।
व्याघ्रस्य चोपवासेन पारणं पशुमारणम् ॥ २५ ॥
किंशुके[1] शुक मातिष्ठ चिरकालफलेच्छया ॥
बाह्यरङ्गप्रसङ्गेन के के नाऽनेन वञ्चिताः ॥ २६ ॥
सुमुखोऽपि सुवृत्तोपि सन्मार्गे पतितोऽपि च ॥
महतां पादलग्नोपि व्यथयत्येव कण्टकः ॥ २७ ॥
रविरपि न दहति तादृग्यादृग्दहति वालुकानिकरः[2] ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति ॥ २८ ॥
त्यक्त्वापि निजप्राणान्परहितविघ्नं खलः करोत्येव ।
कवले पतिता सद्यो वमयति[3] मक्षिकाऽन्नभोक्तारम् ॥ २९ ॥
संत्यज्य शूर्पवद्दोषान्गुणान्गृह्णाति पण्डितः ।
दोषग्राही गुणत्यागी पल्लोलीव[4] हि दुर्जनः ॥ ३० ॥
नलिकागतमपि कुटिलं न भवति सरलं शुनः पुच्छम् ।
तद्वत्खलजनहृदयं बोधितमपि नैव याति माधुर्यम् ॥ ३१ ॥
भिक्षो कंथा श्लथा ते नहि शफरिवधे जालमश्नासि मत्स्यां-
स्ते वै मद्योपदंशाः पिबसि मधुसमं वेश्यया यासि वेश्याम् ।
दत्त्वांऽघ्रिं मूर्ध्न्यरीणां तव किमुरिपवो भित्तिभेत्ताऽस्मि येषां
चोरोऽसि द्यूतहेतोस्त्वयि सकलमिदं नाऽस्ति नष्टे विचारः ३२
विद्या विवादाय धनं मदाय शक्तिः परेषां परपीडनाय ।
खलस्य साधोर्विपरीतमेतज्ज्ञानाय दानाय च रक्षणाय ॥ ३३ ॥
सद्वंशजातं[5] गुणकोटियुक्तं[6] धनुः कथं पार्थिववामहस्ते ।
शरः परप्राणविहारदक्षः सपक्षपातोऽप्यधमो गरीयान् ॥ ३४ ॥
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लुं[7] यथा ॥ ३५ ॥

---

१ पलाशवृक्षे. २ वालुकासमूहः ३ वान्ति करोति. ४ 'चालनी' इति लोके. ५ वेणुः कुलं च ६ मौर्वी विद्याविनयादिश्च. ७ भमम् संख्यादिवंशेषश्च ८ चञ्चलम् ।

संवर्धितोपि भुजगः पयसा न वश्य-
स्तत्पालकानपि निहन्ति बलेन सिंहः ॥
दुष्टः परैरुपकृतस्तदनिष्टकारी
विश्वासलेश इह नैव बुधैर्विधेयः ॥ ३६ ॥

अशक्ताः शक्तिमात्मीयां श्लाघयन्ते[1] च दुर्जनाः ।
ते भवन्त्युपहासाय महतामेव सन्निधौ ॥ ३७ ॥

एते स्निग्धतमा इति मा मा क्षुद्रेषु यात विश्वासम् ।
सिद्धार्थानामेषां[2] स्नेहोऽप्यश्रूणि[3][4] पातयति ॥ ३८ ॥

गुणिनां गुणेषु सत्स्वपि पिशुनजनो दोषमात्रमादत्ते ।
पुष्पे फले विरागी क्रमेलकः[5] कण्टकौघमिव ॥ ३९ ॥

सुजनानामपि हृदयं पिशुनपरिष्वङ्गलिप्तमिह भवति ।
पवनः परागवाही रथ्यासु[6] वहन्रजस्वलो[7] भवति ॥ ४० ॥

विद्यया विमलयाऽप्यलंकृतो दुर्जनः सदसि[8] माऽस्तु कश्चन ।
साक्षरा हि विपरीततां गताः केवलं जगति तेऽपि राक्षसाः ४१

अहो दुर्जनसंसर्गान्मानहानिः पदे पदे ।
पावको लोहसंगेन मुद्गरैरभिहन्यते ॥ ४२ ॥

परिपूर्णेऽपि तटाके काकः कुम्भोदकं पिबति ।
अनुकूलेऽपि कलत्रे नीचः परदारलम्पटो भवति ४३

सर्वलोकपरितोषकारिणि स्वर्धुनीविमलवारिणि स्थिते ।
पूतिगन्धवति[9] पल्वलोदके[10] सूकरः सुखमतीव मन्यते ॥४४॥

उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसन्धं[11] भगवति वसुधे कथं वहसि ॥ ४५ ॥

दुर्जनेन समं सख्यं प्रीतिं चाऽपि न कारयेत् ।

---

१ श्लाघां कुर्वन्ति । २ शिरीषाणां पक्षे सिद्धः अर्थः कार्यं येषाम् । ३ तैलं स्नेहभावश्च । ४ नेत्रोदकम् ५ उष्ट्र ६ वीथीषु ७ रजोयुक्तः ८ सभायाम् ९ दुर्गन्धवति । १० अल्पजलाशयोदके । ११ असत्यप्रतिज्ञम् ।

उष्णो दहति चाऽङ्गारः शीतः कृष्णायते करम् ॥४६॥

दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाऽग्रे हृदि हालाहलं विषम् ॥ ४७ ॥

प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति[1] शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः[2] करोति ॥ ४८ ॥

मृद्धटवत्सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु सन्धेयः ॥ ४९ ॥

मनस्यन्यद्वचस्यन्यत्कार्ये चाऽन्यद्दुरात्मनाम् ।
मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥ ५० ॥

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारिताऽर्धासनो
गाढाऽऽलिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्ताऽऽदरः ।
अन्तर्भूतविषो बहिर्मधुमयश्चाऽतीव मायापटुः
को नामाऽयमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥५१॥

अकरुणत्वमकारणविग्रहः परधने परयोषिति च स्पृहा ।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम् ॥५२॥

जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता[12] मुनौ[13] विमतिता दैन्यं[14] प्रियालापिनि ।
तेजस्विन्यवलिप्तता[15] मुखरता[16] वक्तर्यशक्तिः स्थिरे
तत्को नाम गुणो भवेत्सुगुणिनां यो दुर्जनैर्नाऽङ्कितः ॥५३॥

---

१ शब्दं करोति । २ मत्सर इति लोके । ३ दुःखेन संधातुं शक्यः ४ कपटपटु. ५ निरर्थकविरोधः ६ इच्छा । ७ असहनशीलता । ८ स्वभावसिद्धम् ९ लज्जावति १० व्रतेषु रुचिः प्रीतिर्यस्य तस्मिन् ११ शाठ्यम् । १२ निर्दयता । १३ मननशीले १४ हीनत्वम् १५ सगर्वता । १६ वाचालत्वं गर्ह्यवाक्त्वमिति यावत् ।

विधातृत्वादिपदमप्याप्यते निजधर्मतः ।
एतं चिन्तामणिं हित्वा धनायाटन्ति तान्नुमः ॥ २ ॥
सदाचारवतां पुंसां तपःसिद्धिः पदेपदे ।
यथा मानसहंसानां प्रफुल्ला हेमपद्मिनी ॥ ३ ॥
स्वधर्म एव कर्तव्यः प्राणान्तेऽपि नरैः सदा ।
पुमर्थानर्घ्यरत्नानां स एव यत आकरः ॥ ४ ॥
स्वकर्मनिरतं नित्यं स्तुवन्त्यपि दिवौकसः ।
तद्विहाय हितार्थ्यन्यत्को वा नरस्वरश्चरेत् ॥ ५ ॥

## भक्तिप्रशंसा ।

श्रीः ॥ विमुक्तानां तु दूत्येका भक्तिरेव विराजते ।
सैवादौ दृढमाराध्या ततस्तद्गतिलालसैः ॥ १ ॥
भक्तिसौभाग्यभोगेन भगवानपि भृत्यताम् ।
प्रयाति का कथान्यार्थस्वार्थानां स्वहितार्थिनः ॥ २ ॥
अहो भक्त्या कङ्करोपि पुरान्तकसरूपताम् ।
पुरावाणेति सा कस्मान्न कार्यानन्दलिप्सुभिः ॥ ३ ॥
मृढभक्त्यवभासेन पशवोप्यापुरीश्वरम् ॥
तस्माद्विजायते सैव तरी संसारवारिधेः ॥ ४ ॥
रतिं दिशति या पुंसि जीवन्मुक्त्या सह स्फुटम् ।
प्रस्वेदप्रमुखैर्लिङ्गैस्तस्यै भक्त्यै नमोनमः ॥ ५ ॥

## स्थानमाहात्म्यम् ।

श्रीः ॥ नक्रः[1] स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ॥
स एव प्रच्युतः स्थानाच्छुनाऽपि[2] परिभूयते ॥ १ ॥
स्थानं प्रधानं न बलं प्रधानं स्थाने स्थितः कापुरुषोऽपि शूरः।
जानामि नागेन्द्र तव प्रभावं कण्ठं विना गर्जसि शंकरस्य ॥२॥

---

१ मकरः ' मगर ' इति लो० २ भषकेण।

किंचिदाश्रयसौन्दर्याद्धत्ते शोभामसाध्वपि ।
कान्ताविलोचने न्यस्तं मलीमसमिवाऽञ्जनम् ॥ ३ ॥
गुणैः [1]सर्वज्ञकल्पोऽपि सीदत्येको निराश्रयः
अनर्घ्यमपि माणिक्यं हेमाऽऽश्रयमपेक्षते ॥ ४ ॥
कुस्थानस्य प्रवेशेन गुणवानपि पीड्यते ।
वैश्वानरोऽपि लोहस्थ [2]कारुकैरभिहन्यते ॥ ५ ॥
आश्रयवशेन सततं गुरुता लघुता च जायते पुंसाम् ।
[3]विन्ध्ये विन्ध्यसमानाः करिणो बत दर्पणे लघवः ॥ ६ ॥
अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्ति योग्या अयोग्याश्च ॥ ७ ॥
आसीत्पूर्वं विमलजलधौ [4]मण्डनं भूपतीनां
नारीणां च प्रबलमुकुटे काञ्चनेन प्रसङ्गात् ।
तन्त्रीबद्धः कथमिदमहो[5]काचखण्डेन [6]सार्धं
भिल्लीकण्ठे मरकतमणे कामवस्थां गतोऽसि ॥ ८ ॥
पात्रविशेषे न्यस्तं गुणान्तरं व्रजति [7]शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ [8]मुक्ताफलतां [9]पयोदस्य ॥ ९ ॥

## जिव्हा ।

श्रीः ॥ हे जिह्वे [10]रससारज्ञे सर्वदा मधुरप्रिये ।
भगवन्नामपीयूषं पिब त्वमनिशं सखे ॥ १ ॥
[11]अङ्गेषु [12]मुख्या [13]द्विजमध्यसंस्था [14]वाणाऽनुसन्धानपराऽसि नित्यम् ।
[15]अन्धस्थिरप्रेमरसा रसज्ञे [16]नरस्तुतिं तत्त्यज[17]कर्णवत्त्वम् ॥ २ ॥

१ शिवतुल्यः २ लोहकारैः ३ विन्ध्यपर्वते । ४ भूषणम् । ५ काचमणिना ६ सह ७ कौशलम् ८ मौक्तिकत्वम ९ मेघस्य । १० रसस्य सारं जानाति सा ११ शरीरावयवेषु पक्षे देशेषु १२ मुखे भवा मुख्या । १३ दन्ताः ब्राह्मणाश्च । १४ वाणं वर्णनं तदनुसन्धानपरा पक्षे धवयोः सावर्ण्यात् बाणानुसन्धातत्परः १५ अन्धः अन्नं तस्मिन् स्थिरः प्रेमरसो यस्याः पक्षे अधो धृतराष्ट्रस्तास्मिन् दृढः प्रेमरसो यस्य । १६ मनुजस्तुतिं पक्षे नरोऽर्जुनः १७ अङ्गराजवत् । कर्णपक्षे अंगेषु मुख्य इत्यादिलिंगविपरिणामेन योजनीयम् ।

रसने[1] रचितोऽयमञ्जलिस्ते परनिन्दापरुषैरलं वचोभिः ।
नरकाऽपहरं नमः शिवायेत्यमुमादिप्रणवं[2] भजस्व मन्त्रम् ॥ ३ ॥
द्वात्रिंशद्दशन[3]द्वेषिमध्ये भ्रमसि नित्यशः ।
तदिदं शिक्षिता केन जिव्हे संचारकौशलम् ॥ ४ ॥

## मनः ।

श्रीः ॥ रे रे मनो मम मनोभवशासनस्य[4]
पादाम्बुजद्वयमनारत[5]मानवत्त्वम् ।
किं मां निपातयसि संसृतिकूप[6]मध्ये
तेनैव किं तव गमिष्यति पुत्रशोकः ॥ १ ॥
रे चित्त चिन्तय चिरं चरणौ मुरारेः
पारं गमिष्यति भवान् भवसागरस्य ।
पुत्रः कलत्रमितरे सुहृदः सहायाः
सर्वं विलोकय सखे मृगतृष्णिकेव[7] ॥ २ ॥
नपुंसकमिति ज्ञात्वा प्रियायै प्रेषितं मनः
तत्तु तत्रैवाऽरमत हताः[8] पाणिनिना वयम् ॥ ३ ॥
कृष्ण त्वदीयपदपङ्कजपञ्जरान्ते
अद्यैव मे विशतु मानसराजहंसः ॥
प्राणप्रयाणसमये कफवातपित्तैः
कण्ठावरोधनविधौ स्मरणं कुतस्ते ॥ ४ ॥
मनसैव कृतं पापं न शरीरकृतं कृतम् ।
येनैवाऽऽलिङ्गिता कान्ता तेनैवाऽऽलिङ्गिता सुता ॥ ५ ॥
मनोऽसि सान्तं[9] भज तर्ह्यनन्तं[10] क्षयाऽर्दितं चंद्रमसं[11] जहीहि ।
सोऽपि[12] स्वयं सान्त इति प्रशस्तं धत्ते सदाऽनन्तपदाऽवलम्बम् ॥ ६ ॥

---

१ जिव्हे । २ आदौ प्रणवः ओंकारो यस्य एतादृशं मन्त्रम् ३ दन्ताः ४ मनोभवो मदनस्तच्छासनस्य शिवस्य ५ सततम् ६ संसार एव कूपस्तन्मध्ये ७ मृगमरीचिका ८ वञ्चिताः ९ सकारान्तम् पक्षे अन्तसहितं नश्वरमित्यर्थः १० न विद्यते अन्तो यस्य तं विष्णुम् ११ चन्द्रो हि सान्तः मनसो देवता १२ सोपि चन्द्रोपि स्वयं सान्तः सकारान्तः पक्षे नश्वरः अतोऽनन्तपदावलम्बम् आकाशपदाश्रयं पक्षे विष्णुपदाश्रयं धत्ते ।

इतस्ततश्चङ्क्रमणो रजोभिः क्रीडन्मनोमत्तमतङ्गजोऽयम् ।
यः सर्वदा पि[1]प्पलभोगतुष्टस्तच्छान्तये त्वं हरिमाश्रयस्व॥७॥

भिक्षाऽशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं सुजीर्णशतखण्डमयी च कन्था
हाहा तथाऽपि विषयान्न जहाति चेतः ॥ ८ ॥

परिभ्रमसि किं वृथा क्वचन चित्त विश्राम्यतां
स्वयं भवति यद्यथा भवति तत्तथा नान्यथा ।
[2]अतीतमपि न स्मरन्नपि च भावि संकल्पय-
न्न[3]तर्कितगमाऽऽगमाननुभवस्व भोगा[4]निह ॥ ९ ॥

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसाऽऽस्वादने लम्पट[5]त्वं
नोचेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ १० ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रय
श्रे[6]योमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।
स्वा[7]त्मीभावमुपैहि संत्यज निजां [8]कल्लोललोलां गतिं
मा भूयो भज भंगुरां नवरतिं चेतः प्रसीदाऽधुना ॥ ११ ॥

पतितः पशुरपि कूपे निःसर्तुं चरणचालनं कुरुते ॥
धिक् त्वां[10] चित्त भवाब्धेरिच्छामपि नो बिभर्षि निःसर्तुम्१२

## चित्तं ।

हसति कदाचिद्रौति भ्रान्तं सदृशदिशः परिभ्रमति ।
हृष्टं कदापि दुष्टं शिष्टं दुष्टं च निन्दति स्तौति ॥ १ ॥
कमपि द्वेष्टि सरोषं ह्याऽऽत्मानं श्लाघते कदाचिदपि ॥
चित्तं पिशाचमभवद्राक्षस्या तृष्णया व्याप्तम् ॥ २ ॥

---

१ तुच्छः २ गतम् ३ अचिन्त्यगमनागमनान् ४ विषयान् ५ लुब्धस्त्वम् ६ कल्याणपद्धतिम् । ७ स्वसंवेद्यत्वम् । ८ कल्लोलवच्चञ्चलाम् । ९ नश्वराम् १० त्वाम् ।

दम्भाभिमानलोभैः कामक्रोधोरुमत्सरैश्चेतः ।
आकृष्यते समन्ततः श्वभिरिव पतिता तनुर्मार्गे ॥ ३ ॥
तस्माच्छुद्धविरागो मनोभिलषितं त्यजेदर्थम् ।
तदनभिलषितं कुर्यान्निर्व्यापारं तदा भवति ॥ ४ ॥
प्रतिपलमखिलाँल्लोकान् मृत्युमुखं प्रविशतो निरीक्ष्यापि ।
हा हतकं चित्तमिदं विरमति नाद्यापि विषयेभ्यः ॥ ५ ॥

## भोगाद्यस्थिरत्वम् ।

श्रीः ॥ भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम् ।
शास्त्रे वादभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयाऽन्वितं भुवि नृणां वैराग्यमेवाऽभयम् ॥ १ ॥
आक्रान्तं मरणेन जन्म जरया यात्युल्बणं[1] यौवनं
संतोषो धनलिप्सया शर्मसुखं[2] प्रौढाङ्गनाविभ्रमैः[3] ।
लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनै-
रस्थैर्येण विपत्तयोऽप्युपहता ग्रस्तं न किं केन वा ॥ २ ॥
आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव प्रापदः[4] ।
जातं जातमवश्यमाशु विवशं[5] मृत्युः[6] करोत्यात्मसा-[7]
त्तत्किं केन निरंकुशेन[8] विधिना यन्निर्मितं सुस्थिरम् ॥ ३ ॥
भोगास्तुंग[9]तरंगभंगचपलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव[10] दिनानि यौवनसुखं स्फूर्तिः क्रियासु स्थिता ।
तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा बोधका
लोकाऽनुग्रहपेशलेन[11] मनसा यत्नः समाधीयताम् ॥ ४ ॥

---

१ उच्छ्रितम् २ शान्तिसुखम् ३ विलासैः ४ प्रकृष्टा आपदो विपत्तयः ५ पराधीनम् ६ कालः ७ आत्माधीनम् ८ स्वतन्त्रेण ९ तुंगाः उच्चा ये तरगां ऊर्मयस्तेषां भंगस्तद्वच्चपलाः १० अल्पानि । ११ मृदुलेन.

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताऽभ्रपटलीलीनाम्बुवद्भंगुरम् ।
लोला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ॥ ५ ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा[1] घनसमय[2]तडिद्विभ्रमा भोगपूराः ।
कण्ठाऽऽश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः[3] प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाऽम्भोधिपारं तरीतुम् ६

कृच्छ्रेणाऽमेध्यमध्ये निपतिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरसमये यौवने चोपभोगः ।
वामाक्षीणामवज्ञा[4]विहसितवसतिर्वृद्धभावोऽप्यसाधुः ।
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किंचित् ७

भोगा [5]भंगुरवृत्तयो बहुविधास्तैरेव चा[6]ऽयं भव-
स्तत्कस्येह कृते परिभ्रमत हे लोकाः [7]कृतं चेष्टितैः ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
कामोत्पत्तिवशे स्वधामनि यदि [8]श्रद्धेयमस्मद्वचः ॥ ८ ॥

## पश्चात्तापः ।

श्रीः ॥ विद्या नाऽधिगता कलङ्करहिता वित्तं च नोपार्जितं
शुश्रूषाऽपि [9]समाहितेन [10]मनसा पि[11]त्रोर्न संपादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नाऽऽलिंगिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥ १ ॥

---

१ संकल्पतुल्याः । २ वर्षाकालविद्युद्विलासाः अतिचञ्चला इत्यर्थः । ३ कान्ताभिः । ४ अवमानः । ५ भङ्गशीलाः । ६ संसारः । ७ चेष्टितैर्व्यापारैः कृतं अलं पर्याप्तमिति यावत् व्यापारं मा कुरुतेत्यर्थः । ८ विश्वसनीयम् । ९ संपादिता । १० स्वस्थेन । ११ माता च पिता च पितरौ तयोः ।

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगवन्ति च धनान्येकान्ततो निःस्पृहाः ।
न प्राप्तानि पुरा न संप्रति न च प्राप्तो दृढप्रत्ययो ।
वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥२॥

अर्थाः पादरजःसमा गिरिनदीवेगोपमं यौवनं
आयुष्यं जलबिन्दुलोलचपलं फेनोपमं जीवितम् ।
धर्मं यो न करोति निश्चलमतिः स्वर्गाऽर्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाऽग्निना दह्यते ॥ ३ ॥

धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि ।
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम् ॥ ४ ॥

नाऽभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदलनैर्नाकं न नीतं यशः ।
कान्ताकोमलपल्लवाऽधररसः पीतो न चन्द्रोदये
तारुण्यं गतमेव निष्फलमहो शून्याऽऽलये दीपवत् ॥५॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नाऽऽलिंगितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ६ ॥

आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरंगचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥७॥

---

१ ब्रह्मज्ञानविचारेण शुद्धान्तःकरणाः । २ दुःखेन कर्तुं शक्यम् । ३ स्वभावतः नैरन्तर्येणेति वा । ४ निरिच्छाः । ५ विश्वासः । ६ केवलं इच्छया गृहीतानि । ७ 'अडसर' इति लोके । ८ जरया वार्धक्येन परिभिन्नः । ९ खेदम् । १० स्वर्गम् । ११ छेदनाय । १२ परश्वधाः ।

क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च संपूर्णविभवः।
जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनु[1]-
र्नरः संसाराऽन्ते विशति यमधानीं[2] जवनिकाम्[3] ॥ १० ॥
चिरं ध्याता रामा[4] क्षणमपि न रामप्रतिकृतिः[5]
परं पीतो रामाऽधर इह न रामाऽङ्घ्रिसलिलम्[6]।
नता रुष्टा रामा यदरचि न रामाय विनति-[7]
र्गतं मे साम्राज्यं[8] न दशरथजन्मा[9] परिगतः ॥ ११ ॥
जन्मेदं व्यर्थतां[10] नीतं भवभोगोपलिप्सया।
काचमूल्येन[11] विक्रीतो हन्त[12] चिन्तामणि[13]र्मया ॥ १२ ॥

## गृहस्थाश्रमः।

श्रीः ॥ सानन्दं सदनं[14] सुताश्च सुधियः कान्ता न दुर्भाषिणी
सन्मित्रं सधनं स्वयोषिति रतिश्चाऽऽज्ञापराः सेवकाः।
आतिथ्यं शिवपूजनं प्रतिदिनं मिष्टान्नपानं गृहे
साधोः संगमुपासते हि सततं धन्यो गृहस्थाश्रमः ॥ १ ॥
मानुष्यं वरवंशजन्म[15] विभवो[16] दीर्घायुरारोग्यता
सन्मित्रं सुसुतः सती प्रियतमा भक्तिश्च नारायणे।
विद्वत्त्वं सुजनत्वमिन्द्रियजयः सत्पात्रदाने रति-
स्ते पुण्येन विना त्रयोदशगुणाः संसारिणां दुर्लभाः ॥ २ ॥
क्रोशन्तः शिशवः सवारि[17] सदनं पङ्काऽऽवृतं चाऽङ्गणं
शय्या दंशवती[18] च रूक्ष[19]मशनं धूमेन पूर्णं गृहम्।

---

१ वलीभिर्मण्डिता तनुर्यस्य। २ कृतान्तनगरीम्। ३ 'पडदा' इति लो०। ४ स्त्री. ५ राममूर्तिः। ६ रामपादोदकम्। ७ नमस्कारः। ८ सार्वभौमत्वम्। ९ दशरथा-ज्जन्म यस्य सः रामः। १० निष्फलत्वम्। ११ काचमणेर्मूल्येन। १२ हन्त इति खेदे। १३ रत्नविशेषः स हि चिन्तितमर्थम् ददाति इति प्रसिद्धिः। १४ गृहम्। १५ उत्तमकुले उत्पत्तिः। १६ ऐश्वर्यम्। १७ उदकपूर्णम्। १८ मशकपूर्णा। १९ अस्निग्धम्।

भार्या निष्ठुरभाषिणी[1] प्रभुरपि क्रोधेन पूर्णः सदा
स्नानं शीतलवारिणा हि सततं धिग्धिग्गृहस्थाश्रमम् ॥ ३ ॥
न्यायाऽर्जितधन[2]स्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः ।
शास्त्रवित्सत्यवादी च गृहस्थोऽपि विमुच्यते[3] ॥ ४ ॥
सविप्र[4]पादोदककर्दमानि सवेदशास्त्रध्वनिगर्जितानि ।
स्वाहास्वधाकारनिरन्तराणि स्वानन्दतुल्यानि गृहाणि तानि ५
न विप्रपादोदकपङ्किलानि न वेदशास्त्रध्वनिगर्जितानि ।
स्वाहास्वधाकारविवर्जितानि श्मशानतुल्यानि गृहाणि तानि ६
यदि रामा[5] यदि च रमा[6] यदि तनयो विनयगुणोपेतः ।
तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम् ॥ ७ ॥
वंशो विश्वाऽवतंसो[7] जनुरनुपहतं स्वान्तमौन्नत्य[8]कान्तं
लीला शीलानुकूला क्षपितकलिमला काऽपि विद्यानवद्या[9] ।
वाणी वेणी[10]गुणानां समधिकयशसां साधिका[11] साधिका श्रीः
श्रीमद्गौरीमयूरीमुदिर[12] पुरहर[13] त्वत्कृपाया विपाकैः[14] ॥ ८ ॥
तावद्विद्याऽनवद्या गुणगणमहिमा रूपसंपत्तिशौर्यं
स्वस्थाने सर्वशोभा परगुणकथने वाक्पटुस्तावदेव ।
यावत्पाकाकुलाभिः स्वगृहयुवतिभिः प्रेषिताऽपत्यवक्त्रात्
हे बाबा[15] नास्ति तैलं नच लवणमपीत्यादि वाचां प्रचारः ॥ ९ ॥

# जरा ।

श्रीः ॥ कृतान्तस्य दूती जरा कर्णमूलं
समागत्य वक्तीति लोकाः शृणुध्वम् ।

---

१ कठोरभाषिणी । २ न्यायेन संपादितं धनं येन । ३ मुक्तो भवति । ४ ब्राह्मणचरणक्षालनोदकेन पंकिलानि । ५ स्त्री । ६ लक्ष्मीः । ७ विश्वभूषणम् । ८ मनः । ९ निर्दोषा । १० प्रवाहः । ११ साधयित्री । १२ गौर्येव मयूरी तस्याः मुदिरो मेघः । १३ हे त्रिपुरनाशक । १४ परिणामः फलमित्यर्थः । १५ 'हेबाबा' इदं तु पितुर्लौकिकं संबोधनम् ।

परस्त्रीपरद्रव्यवाञ्छां त्यजध्वं
भजध्वं रमानाथपादाऽरविन्दम् ॥ १ ॥

कृष्णवर्त्मनि[1] गुणान् गणयन्ती जीवने[2]ऽपि जनयत्यनुरागम् ॥
आगता बत जरेव हिमानी[3] सेव्यतां सुरतरंगवतीयम्[4] ॥ २ ॥

शशिनीव हिमार्तानां घर्मार्तानां यथा रवौ ।
मनो न रमते स्त्रीणां जरापीतेन्द्रिये[5] पतौ ॥ ३ ॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती[6]
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाऽम्भो
लोकस्तथाऽप्यहितमाचरतीति चित्रम् ॥ ४ ॥

गात्रं संकुचितं गतिर्विगलिता भ्रष्टा च दन्तावलि-
र्दृष्टिर्नश्यति वर्धते बधिरता वक्त्रं च लालायते ।
वाक्यं नाद्रियते च बान्धवजनैर्भार्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते[7] ॥ ५ ॥

वर्णं सितं वीक्ष्य शिरोरुहाणां[8]
स्थानं जरा परिभवस्य यदेव पुंसाम् ।
आरोपिताऽस्थिशकलं[9] परिहृत्य[10] यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ६ ॥

मलिनैरलकैरेतैः[11] शुक्लत्वं प्रकटीकृतम् ।
तद्रोषादिव निर्याता वदनाद्रदनावलिः[12] ॥ ७ ॥

---

१ अग्नौ पक्षे कृष्णस्य वर्त्म मार्गस्तस्मिन् । २ उदके प्राणे च । ३ हिमसंहतिः ४ सुरते रंगवती. प० सुराणां तरंगवती भागीरथी । ५ जरया पीतानि ग्रस्तानि इंद्रियाणि यस्य तस्मिन् । ६ कम्पयन्ती । ७ शत्रुवदाचरति । ८ केशानाम् । ९ आरोपितं अस्थ्नः शकलखण्डं यस्मिन् । १० अस्पृश्यत्वादिति भावः । ११ केशैः । १२ दन्तपंक्तिः ।

यममिव करधृतदण्डं हरिमिव सगदं[1] शशांकमिव वक्रम् ।
शिवमिव च विरूपाक्षं[2] जरा करोत्यकृतपुण्यमपि ॥ ८ ॥

श्रुतिः[3] शिथिलतां गता स्मृतिरपि[4] प्रनष्टाऽधुना
गतिर्विपथमागता विगलिता द्विजानां[5] ततिः ।
गवामपि[6] च संहतिः समुचितक्रियातश्च्युता
कृतानुजरया तया कलियुगस्य साधर्म्यता[7] ॥ ९ ॥

वदनं दशनविहीनं[8] वाचो न परिस्फुटा गता शक्तिः ।
अव्यक्तेन्द्रियशक्तिः पुनरपि बाल्यं कृतं जरया ॥ १० ॥

पटुरटति पलितदूतो[9] मस्तकमासाद्य सर्वलोकस्य ।
परिभवति जरामरणं कुरु धर्मं विरम पापेभ्यः ॥ ११ ॥

वृद्धत्वाऽनलदग्धस्य[10] सारं यौवनवस्तुनः ।
दृश्यते देहगेहेषु भस्मैव पलितच्छलात्[11] ॥ १२ ॥

वीक्ष्यते पलितश्रेणि[12]र्नैव वृद्धस्य मूर्धनि ।
मुधैव[13] जातं जन्मेति किंतु भस्म वि[14]धिर्न्यधात्[15] ॥ १३ ॥

इयत्यामपि सामग्र्यां सुकृतं[16] न कृतं त्वया ।
इतीव कुपितो दन्तानन्तकः[17] पातयत्यलम् ॥ १४ ॥

पादौ संस्तम्भयन्ती[18] मुखमपि नमयन्त्यङ्गमाकुञ्चयन्ती
हस्तावुत्कम्पयन्ती[19] प्रणयिजनवचो न श्रुतीः श्रावयन्ती ।
रत्यामुद्रेजयन्ती वलिततनुमती[20] नूतनोढा[21] जरा वा
तुल्या पूर्वा[22] तु पुंस[23]स्त्रसति[24] बत परा[25] भीतिहेतुर्नरस्य[26] ॥ १५ ॥

---

१ गदया सहित पक्षे गदेन रोगेण सह तम् । २ विकृताक्षम् । ३ कर्णेन्द्रियं वेदश्च । ४ स्मरणं मन्वादिवाक्यं च । ५ दन्तानां ब्राह्मणानां च । ६ इन्द्रियाणां धेनूनां च । ७ समानधर्मत्वम् । ८ दन्तरहितम् । ९ पलितमेव दूतः । १० वार्द्धक्यं तदेवानलस्तेन दग्धस्य । ११ पलितमिषेण । १२ पलितपंक्तिः । १३ व्यर्थमेव । १४ ब्रह्मा । १५ निक्षिप्तवान् । १६ पुण्यम् । १७ यमः । १८ पादयोः स्तंभनं कुर्वती । १९ उद्वेगं कुर्वती । २० वलयः सजाता यस्याः सा वलिता सा चासौ तनुश्च तद्वती पक्षे वलितं वलनं तद्युक्तास्तनवृती । २१ नवीन विवाहिता स्त्री । २२ नूतनोढा । २३ पुरुषात् । २४ उद्वेगं प्राप्नोति । २५ जरा । २६ भयकारणम् ।

[1]शतमन्युं दण्ड[2]धरं [3]कुबेरमपि [4]शूलिनं तथा [5]गदिनम् ।
कुरुते जरा न सा किं कुर्यान्नीरूपनामकं मनुजम् ॥१६॥

स्थूलप्रावरणोऽतिवृत्तकथ[6]कः कासाश्रुलालाऽऽविलो
भग्नोरःकटिपृष्ठजानुजघनो मुग्धोऽतिथीन्वारयन् ।
शृण्वन् धृष्टव[7]धूवचांसि धनुषा संत्रासयन्वायसा-
नाशापाशनिबद्धजीवविभवो वृद्धो गृहे [8]ग्लायति ॥१७॥

मृत्योः सेनां किमेनां न कलयसि जरां वायुवाहाधिरूढां
प्रौढान्रोगान्समग्रान्नगरमपि नवद्वारमार्गप्रविष्टान् ।
दन्तान्यातान्दिगन्तान्नयनयुगलमप्यद्रवच्चेतसा ते
सुप्तोस्यद्यापि जीव स्मरसि न चरणौ त्वं कुतो राघवस्य १८

## संसारः ।

संसार तव निस्सारपद[9]वी न द[10]वीयसी ।
अन्त[11]रा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ १ ॥

दुःखाङ्गारकतीव्रः संसारोऽयं म[12]हानसो गहनः ।
इह विषयाऽमृतलालसमानस मार्जार मा निपत ॥ २ ॥

असारे खलु संसारे सारं श्वशुरमन्दिरम् ।
हरो हिमालये शेते हरिः शेते महोदधौ ॥ ३ ॥

असारे खलु संसारे सारमेतच्चतुष्टयम् ।
काश्यां वासः सतां संगो गङ्गाऽम्भः शंभुसेवनम् ॥४॥

क्वचिद्विद्वद्गोष्ठी क्वचिदपि सुरामत्तकलहः
क्वचिद्वीणावादः क्वचिदपि च हाहेति रुदितम् ।

---

१ इन्द्रं कोपनं च । २ यमं यष्टिधरं च । ३ धनाधिपं कुत्सितशरीरं च । ४ शिवं शूलयुक्तं च । ५ विष्णुं गदयुक्तं च । ६ अतिक्रान्तानि वृत्तानि कथयतीति । ७ धाष्टर्ययुक्तस्त्रीवचनानि । ८ खेदं प्राप्नोति । ९ मार्गः । १० अतिदूरा । ११ मध्ये । १२ पाकगृहम् ।

क्वचिद्रम्या रामा क्वचिदपि जराजर्जरतनु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥ ५ ॥

कृच्छ्रेणाऽमेध्यमध्ये नियमिततनुभिः स्थीयते गर्भगर्ते
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने विप्रयोगः ।
नारीणामप्यवज्ञा विलसति नियतं वृद्धभावेऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्तोकमप्यस्ति किंचित् ६

## भवजयोपायः ।

श्रीः ॥ शुचिसांनिध्ययोगेन हृदि रामोपगूहनात् ।
कर्मसाक्षिसमालोकाद्ध्रुवं हेमन्तवज्जयेत् ॥ १ ॥

प्राणाघातान्निवृत्तिः परधनहरणे संयमः सत्यवाक्यं
काले शक्त्या प्रदानं युवतिजनकथामूकभावः परेषाम् ।
तृष्णास्रोतोविभङ्गो गुरुषु च विनयः सर्वभूताऽनुकम्पा
सामान्यः सर्वशास्त्रेष्वनुपहतविधिः श्रेयसामेष पन्थाः ॥ २॥

इतरभजनघनरसतः फलनिष्पत्तिर्न वा भवेदिति न ।
मुक्ताः परं तु लोके स्वातिघनरसं विना न जायेरन् ॥ ३ ॥

## कालः ।

श्रीः ॥ व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ॥

---

१ अशुचि मलादि तन्मध्ये २ जरायुणा बद्धशरीरैः ३ गर्भाशये ४ अवमानः । ५ अल्पम् । ६ अग्निसन्निधानेन पक्षे शुचिः पवित्रो गुर्वादिस्तत्समागमेन ७ रामायाः स्त्रियाः उपगूहनादालिंगनात् पक्षे रामस्य हृदि ध्यानात् । ८ सूर्याऽवलोकनात् पक्षे परमात्मनोऽपरोक्ष्यात् ९ संसारम् । १० स्त्रीजनवार्ता ११ तृष्णाप्रवाहोपरोधः । १२ दया १३ इतरेषां भजने यो घनरसस्तेन पक्षे इतरे ये भजना नक्षत्राणि तेभ्यो या घनरसः उदकं तस्मात् १४ फलोत्पत्तिः पक्षे फलानां सस्यादीनामुत्पत्तिः १५ जीवन्मुक्ताः प० मौक्तिकानि १६ स्वस्य अतिघनरसः अत्यन्तं प्रेमरसस्तं विना पक्षे स्वातिनक्षत्रोदकं विना १७ केवलमाकाशसंचारिणः १८ पक्षिणः १९ विपत्तिम् २० कुशलैः ।

दुर्नीतं किमिहाऽस्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि ॥ १ ॥

सा रम्या नगरी महान् स नृपतिः सामन्तचक्रं[1] च त-
त्पार्श्वे तस्य च सा विदग्धपरिषत्[2] ताश्चन्द्रविम्बाऽऽननाः ।
उन्मत्तः स च राजपुत्रनिवहस्ते बन्दिनस्[3] ताः कथाः
सर्वं यस्य वशादगात्स्मृतिपथं कालाय तस्मै नमः ॥ २ ॥

यत्राऽनेके क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राऽप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं चेमौ रजनिदिवसौ दोलयन् द्वाविवाऽक्षौ[4]
कालः काल्या भुवनफलके[5] क्रीडति प्राणिसारैः[6] ॥ ३ ॥

अशनं[7] मे वसनं[8] मे जाया मे बन्धुवर्गो मे ।
इति मेमेकुर्वाणं कालवृको[9] हन्ति पुरुषाऽजम्[10] ॥ ४ ॥

ब्रह्मा विष्णुदिने याति विष्णू रुद्रस्य वासरे ।
ईश्वरस्य तथा सोऽपि कः कालं लङ्घितुं क्षमः ॥ ५ ॥

अप्सु प्लवन्ते[11] पाषाणा मानुषा घ्नन्ति राक्षसान् ।
कपयः कर्म कुर्वन्ति कालस्य कुटिला[12] गतिः ॥ ६ ॥

## क्षमा ।

श्रीः ॥ क्षमा[13]शस्त्रं करे यस्य दुर्जनः किं करिष्यति ।
अतृणे पतितो वन्हिः स्वयमेवोपशाम्यति ॥ १ ॥

आजन्मसिद्धं कौटिल्यं खलस्य च हलस्य[14] च ।
सोढुं तयोर्मुखाऽक्षेपमलमेकैव सा क्षमा[15] ॥ २ ॥

---

१ माण्डलिकराजमण्डलम् २ चतुरसभा ३ स्तुतिपाठकाः ४ पाशौ ५ भुवनमेव फलकः शारीपटस्तस्मिन् ६ प्राणिन एव साराः 'सोंगट्या' इति लो० । ७ भोजनम् ८ वस्त्रम् ९ काल एव वृकः 'लांडगा' इति लो० । १० पुरुष एव अजः ( बोकड ) तम् ११ तरन्ति १२ वक्रा १३ शान्तिः १४ 'नांगर' इति लोके १५ पृथ्वी शान्तिश्च ।

नरस्याऽऽभरणं रूपं रूपस्याऽऽभरणं गुणः ।
गुणस्याऽऽभरणं ज्ञानं ज्ञानस्याऽऽभरणं क्षमा ॥ ३ ॥
क्षमाबलमशक्तानां शक्तानां भूषणं क्षमा ।
क्षमा वशीकृतिर्लोके क्षमया किं न सिध्यति ॥ ४ ॥

## क्रोधनिन्दा ।

श्रीः ॥ क्रोधान्धकूपपतिताः खादन्ति स्ववपूंष्यपि ।
हन्तातस्तं कथं त्यक्तुं विलम्बः क्रियतां बुधैः ॥ १ ॥
दुर्वासःप्रभृतीनां च ब्रह्मतत्त्वविदामपि ।
क्रोधस्यैव प्रसादेन नानाविपदभूत्खलु ॥ २ ॥
शरन्मध्यान्हकालेपि क्रोधान्धः स्वतनूमपि ।
यन्न जानाति तत्रान्यज्ञानवार्तैव का भवेत् ॥ ३ ॥
किं कुम्भीपाक एवायं कोपरूपेण देहिनाम् ।
त्रैलोक्येपि विपत्यर्थमवतीर्णो भवार्णवे ॥ ४ ॥
क्रोधमुग्धधियां नैव सुखं कालत्रयेपि च ।
दृष्टं कदाप्युलूकानां क्रीडनं फुल्लपङ्कजे ॥ ५ ॥

## क्षुधा ।

श्रीः ॥ आदौ रूपविनाशिनी कृशकरी कामांऽकुरच्छेदिनी
पुत्राऽमित्रंकलत्रभेदनकरी गर्वांकुरच्छेदिनी ।
कामं मन्दकरी तपःक्षयकरी धर्मस्य निर्मूलनी ।
मा मां संप्रति सर्वरोगजननी प्राणापहन्त्री क्षुधा ॥ १ ॥
शय्या वस्त्रं चन्दनं चारु[3] हास्यं वीणा वाणी दृश्यते या च नारी ।
न भ्राजन्ते क्षुत्पिपासातुराणां सर्वाऽऽरम्भास्तण्डुलाः प्रस्थमूलाः २
नाऽस्ति क्षुधासमं दुःखं नाऽस्ति रोगः क्षुधासमः ।
नाऽस्त्याहारसमं सौख्यं नाऽस्ति क्रोधसमो रिपुः ॥ ३ ॥

---

१ शत्रुः २ कुटुम्बम् ३ सुन्दरम् ।

## स्वभावः ।

सर्वस्य हि परीक्ष्यन्ते स्वाभावा नेतरे गुणाः ।
अतीत्य[1] हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते ॥ १ ॥
न धर्मशास्त्रं पठतीति कारणं नचाऽपि वेदाऽध्ययनं दुरात्मनः।
स्वभाव एवाऽत्र तथाऽतिरिच्यते[2] यथा प्रकृत्या मधुरं गवां पयः २
निम्नोन्नतं[3] वक्ष्यति को जलानां विचित्रभावं मृगपक्षिणां च ।
माधुर्यमिक्षौ कटुतां[4] मरीचे स्वभावतः सर्वमिदं हि सिद्धम् ॥ ३ ॥
वह्निस्तस्य जलायते जलनिधिः कुल्यायते[5] तत्क्षणा-
न्मेरुः स्वल्पशिलायते मृगपतेः संघः कुरङ्गायते ।
व्यालो[6] माल्यगुणायते[7] विषरसः पीयूषवर्षायते[8]
यस्याऽङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति[9] ॥ ४ ॥

## जीवितसाफल्यम् ।

श्रीः ॥ यस्य जीवन्ति धर्मेण पुत्रमित्राणि बान्धवाः ।
सफलं जीवितं तस्य नाऽत्मार्थे को हि जीवति ॥ १ ॥
वाणी रसवती यस्य भार्या पुत्रवती सती ।
लक्ष्मीदानवती यस्य सफलं तस्य जीवितम् ॥ २ ॥

## दीपवर्णनम् ।

श्रीः ॥ रक्षपात्रगतं स्नेहं प्रदीपंश्रीविवर्धनम् ।
प्रयास्यन्ति विना तेन भस्मत्वं ये भवद्गुणाः ॥ १ ॥
रे रे दीप तिरस्कृताऽखिलतमःस्तोमाऽरिवर्गस्य ते
रात्रौ गूढनिजाङ्गपातिशलभाऽऽघातेन[12] किं पौरुषम् ।
तत्कर्माऽऽचर येन तावकयशो भूयात्प्रभाते पुन-
र्न स्नेहो न च सा दशा इह परं ज्योतिः परं स्थास्यति २

---

१ अतिक्रम्य । २ अतिक्रम्य वर्तते । ३ नीचोच्चम् । ४ तीक्ष्णताम् । ५ कृत्रिमसरिदिवाचरति । ६ सर्पः । ७ माला । ८ अमृतम् । ९ विजृम्भते । १० शोभा । ११ भूषाणि । १२ ‘ ढोळ ’ इति लोके ।

दीपोऽर्जुन इवाऽऽभाति पंतङ्गजनितापदः ।
किं च राम इवाऽऽभाति समुच्छिन्नदशाननः ॥ ३ ॥

## व्यापारिणः ।

श्रीः ॥ आदौ सत्ययुगे बलिस्तदनु च त्रेतायुगे राघवो
रामः सत्यपराक्रमोऽथ भगवान् धर्मस्तथा द्वापरे ।
दाता कोऽपि न चाऽस्ति संप्रति कलौ जीवन्ति केनाऽर्थिनः
इत्येवं कृतनिश्चयेन विधिना व्यापारिणो निर्मिताः ॥ १ ॥

## परोपकृतिः ।

श्रीः ॥ नीरसान्यपि रोचन्ते कार्पासस्य फलानि मे
येषां गुणमयं जन्म परेषां गुह्यगुप्तये ॥ १ ॥
परोपकारशून्यस्य धिङ्मनुष्यस्य जीवितम् ।
यावन्तः पशवस्तेषां चर्माप्युपकरिष्यति ॥ २ ॥
धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
तन्निमित्तो वरं त्यागो विनाशे नियते सति ॥ ३ ॥

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाऽम्बुभिर्भूरिविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥४॥
श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कङ्कणेन ।
विभाति कायः खलु सज्जनानां परोपकारैर्न तु चन्दनेन ॥ ५ ॥

पद्माऽऽकरं दिनकरो विकचं करोति
चन्द्रो विकासयति कैरवचक्रवालम् ।

---

१ पतङ्गः शलभः तं प्रति जनिता आपदा येन. अपरं चैव इत्यस्मान्नार्थपक्षे- हार पक्षे पतगः सूर्यस्तस्माज्जनिर्जन्म यस्य स कर्णस्तं प्रति जनितापदः । २ समुच्छिन्नं दशं दशाया वर्त्या आननं येन पक्षे समुच्छिन्न उन्मूलितो दशाननो रावणो येन । ३ शुष्काणि । ४ गुह्यरक्षणम् । ५ कर्णः । ६ शास्त्रेण । ७ कासारम् ८ कुमुदमण्डलम् ।

नाऽभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहितेषु कृताऽतियोगाः ॥ ६ ॥

तृणं चाऽहं वरं मन्ये नरादनुपकारिणः ।
घासो भूत्वा पशून् पाति भीरून्[1] पाति रणाऽङ्गणे॥७॥

परोपकृति[2]कैवल्ये[3] तोलयित्वा[4] जनार्दनः ।
गुर्वी[5]मुपकृतिं मत्वा ह्यवतारान्[6] दशाऽग्रहीत्[7] ॥ ८ ॥

## ब्रह्मलिखितम् ।

श्रीः ॥ पत्रं नैव यदा करीर[8]विटपे दोषो वसन्तस्य किं
नोलूकेन[9] विलोक्यते यदि दिवा सूर्यस्य किं दूषणम् ।
धारा नैव पतन्ति चातकमुखे मेघस्य किं दूषणं
यद्धात्रा निजभालपट्टलिखितं तन्मार्जितं[10] कः क्षमः[11] ॥ १ ॥

यः सुन्दरस्तद्वनिता कुरूपा या सुन्दरी सा पतिरूपहीना ।
यत्रोभयं तत्र दरिद्रता च विधेर्विचित्राणि विचेष्टितानि॥२॥

इतरकर्मफलानि यदृच्छया[12] विलिखितानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ३

स हि गगनविहारी[13] कल्मषध्वंसकारी[14]
दशशतकरधारी ज्योतिषां[15] मध्यचारी ।
विधुरपि विधियोगाद्ग्रस्यते राहुणाऽसौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ॥ ४ ॥

---

१ भीतान् भयशीलान् वा. २ परोपकारः ३ मोक्षः ४ उभयोस्तुलनां कृत्वा ५ भारवतीम् ६ मत्स्यादीन् ७ जग्राह ८ 'नेवती' इति लोके ९ दिवाभीतेन १० शोधयितुम् ११ समर्थः १२ स्वेच्छया १३ आकाशसंचारी १४ अन्धकारनाशकर्ता १५ नक्षत्राणाम् ।

त्रिलोकेशः शार्ङ्गी शवरशरैर्लक्ष्यत्वमगम-
द्विर्याता लोकानामलभत शिरःकृन्तनविधिम् ।
प्रयातौ तौ राहोर्दिनकरशशाङ्कौ कवलतां
प्रभुर्नाथः शम्भुः शिरसि लिखितं लङ्घयति कः ॥ ६ ॥

हरिणाऽपि हरेणाऽपि ब्रह्मणा त्रिदशैरपि ।
ललाटलिखिता रेखा न शक्या परिमार्जितुम् ॥ ७ ॥

## वेश्यागर्हणम् ।

श्रीः ॥ वेश्याऽसौ मदनज्वाला रूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ १ ॥

कष्टं जीवति गणिका गणकोऽपि च राजसेवको वैद्यः ।
दिवसे दिवसे मरणं परस्य यच्चित्तरञ्जनं वृत्तिः ॥ २ ॥

एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति पुरुषं न च विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानघटिका इव वर्जनीयाः ॥ ३ ॥

जात्यन्धाय च दुर्मुखाय च जराजीर्णाऽखिलाऽङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाऽभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ४ ॥

---

१ विष्णुः २ शबरो जरानामा भिल्लः प्रभासे परस्परं कलहेनाखिलयादवोपसं-
हारानन्तरमश्वत्थस्याधस्ताद्वामोरौ दक्षिणं पादं निधाय स्थिते भगवति जरानाम्न
भिल्लेन दूरतो भगवच्चरणं दृष्ट्वा मृगमुखभ्रमात्तद्भगवत्पादो बाणेन विद्ध इति भागवतम्
३ ब्रह्मा ४ शिरःकर्तनम् ५ ग्रासताम् ६ देवैः ७ वरांगना ८ रूपमेवेन्धनं
काष्ठं तेन सम्यक्प्रदीप्ता. ९ श्मशानस्थिता घटिकाः घट्यो 'घडा' इति यावत्
एता यथा अस्पृश्यास्तथैव ता वर्जनीया इति भावः १० जन्मान्धाय ११ ग्राम्याय
१२ अर्पयन्तीषु १३ लक्ष्मीलेशाशया १४ गणिकासु ।

हारहीरकहिरण्यभूषणैस्तोषमेति गणिकार्[1]धनैषिणी ।
प्रेमकोमलकटाक्षवीक्षितैरेव जीवति कुलाऽङ्गनाजनः ॥ ५ ॥
तावत्कुलस्त्रीमर्यादा यावल्ल[2]ज्जावगुण्ठनम् ।
हृते तस्मिन् कुलस्त्रीभ्यो वरं वेश्याऽङ्गनाजनः ॥ ६ ॥
धनाऽऽशाकैतवै[3]स्नेहो वित्तै[4]श्चित्ततोषणम् ।
एकमप्यस्ति नाऽस्मासु कथं वेश्यासमा वयम् ॥ ७ ॥

## मद्यपानगर्हणम् ।

श्रीः॥ चित्ते भ्रान्तिर्जायते मद्यपानाद्भ्रान्ते चित्ते पापचर्[5]यामुपैति ।
पापं कृत्वा दुर्[6]गतिं यान्ति मूढास्तस्मान्मद्यं नैव पेयं न पेयम् ॥ १ ॥
मत्तो हिनस्ति[7] सर्वं मिथ्या प्रलपति हि विकलया बुद्ध्या ।
मातरमपि कामयते[8] साऽत्रज्ञं मद्यपानमत्तः सन् ॥ २ ॥
एकतश्चतुरो वेदा ब्रह्मचर्यं यथैकतः ।
एकतः सर्वपापानि मद्यपानं तथैकतः ॥ ३ ॥
मद्यपस्य कुतः सत्यं दया मांसाऽशिनः कुतः
कामिनश्च कुतो विद्या निर्धनस्य कुतः क्रिया ॥ ४ ॥
वैकल्यं[9] धरणीपातमयथोचितजल्पनम्[10] ।
सन्निपातस्य[11] चिन्हानि[12] मद्यं सर्वाणि दर्शयेत् ॥ ५ ॥

## अघटितघटना ।

श्रीः ॥ अम्बुजमम्बुनि जातं नहि दृष्टं जातमम्बुजादम्बु ।
अधुना तद्विपरीतं चरणसरोजाद्विनिर्गतागङ्गा ॥ १ ॥
जाता लता हि शैले जातु लतायां न जायते शैलः ।
अधुना तद्विपरीतं कनकलतायां[13] गिरिद्वयं[14] जातम् ॥ २ ॥

---

१ धनेच्छावती २ लज्जाया अवगुण्ठनं संवरणम् 'घुंगट' इति लोके ३ कपटस्नेहः ४ असत्यगोष्ठीभिः ५ पापाचरणम् ६ नरकम् ७ नाशयति ८ इच्छति ९ विकलत्वम् १० अयुक्तप्रलापः ११ त्रिदोषस्य १२ लक्षणानि. १३ सुवर्णवल्ल्यां तत्तुल्यायामंगयष्ट्याम् १४ पर्वततुल्यं स्तनद्वयमिति भावः ।

कमले कमलोत्पत्तिः श्रूयते न च दृश्यते ।
बाले तव मुखाऽम्भोजे दृष्टमिन्दीवरद्वयम् ॥ ३ ॥

न केनाऽपि श्रुतं दृष्टं वारिणा वारि शुष्यति ।
अहो गोदावरी वारां भवसिन्धुर्विशुष्यति ॥ ४ ॥

मूकाऽऽख्यं कमपि बधिराः श्लोकमाकर्णयन्ति
श्रद्धालुस्तं विलिखति कुणिः श्लाघया वीक्षतेऽन्यः ।
अभ्यारोहत्यहह सहसा पंगुरप्यद्रिशृङ्गं
मान्द्राऽऽलस्याः शिशुतरणतो मन्दमायान्ति वन्ध्याः ५

एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ।
मृगतृष्णाऽम्भसि स्नातः शशशृङ्गधनुर्धरः ॥ ६ ॥

## प्रवासः ।

श्रीः ॥ अहो नु कष्टः सततं प्रवासस्ततोऽतिकष्टः परगेहवासः ।
कष्टाऽधिका नीचजनस्य सेवा ततोऽतिकष्टा धनहीनता च ॥१॥

तीर्थानामवलोकनं परिचयः सर्वत्र वित्ताऽर्जनं
नानाऽऽश्चर्यनिरीक्षणं चतुरता बुद्धेः प्रशस्ता गिरः ।
एते सन्ति गुणः प्रवासविषये दोषोऽस्ति चैको महा-
न्यन्मुग्धामधुराऽधराऽधरसुधापानं विना स्थीयते ॥ २ ॥

देशेदेशे किमपि कुतुकाद्भुतं लोकमानाः
संपाद्यैव द्रविणमतुलं सद्म भूयोऽप्यवाप्य ।
संयुज्यन्ते सुचिरविरहोत्कण्ठिताभिः सतीभिः
सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ॥ ३ ॥

---

१ इन्दीवरसदृशं नेत्रयुगलम् २ उदकेन ३ श्रद्धावान् ४ विकलपाणिः ५ [illegible] ६ खमाकाशं तस्य पुष्पेण कृतः शेखरः शिरोभूषणं येन ७ मरीचिकातोयेन कृतमज्जनः ८ शशशृङ्गकृतधनुर्धारी ९ परगृहवासः १० आश्चर्यम् । ११ वीक्षमाणाः १२ द्रव्यम् १३ बहुलम् १४ गृहम् १५ पुनः ।

आकिञ्चन्यात्[1] अतिपरिचयाज्जायया उपेक्ष्यमाणो[2]
भूपालानामननुसरणाद्विभ्यदेवाऽखिलेभ्यः ।
गेहे तिष्ठन् कुमतिरलसः कूपकूर्मैः सधर्मा[3]
किं जानीते भुवनचरितं किं सुखं चोपभुङ्क्ते ॥ ४ ॥
व्यापारान्तरमुत्सृज्य वीक्षमाणो वधूमुखम् ।
यो गृहेष्वेव निद्राति दरिद्राति स दुर्मतिः ॥ ५ ॥

## व्याजनिन्दा ।

श्रीः ॥ यच्छ्वशुरोऽभूज्जनकः[5] पत्युर्द्वार्ड्याश्च[6] तत्सुता जाया ।
भ्राता भुजंगराजो[7] भक्ता मुक्त्यै भजन्ति तच्चित्रम् ॥ १ ॥
त्रिदोषशमनार्थाय[8] त्वयि मज्जन्ति मानवाः ।
त्वं करोषि चतुर्दोषं[9] कथं गङ्गे न लज्जसि ॥ २ ॥
लावण्यद्रविणव्ययो न गणितः क्लेशो महानर्जितः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषाऽपि स्वगुणाऽनुरूपरमणाऽभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्वीमिमां तन्वता ॥ ३ ॥
इन्दोर्लक्ष्म[10] त्रिपुरजयिनः कण्ठमूलं मुरारे-
र्दिङ्नागानां[11] मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याऽप्युर्वीवलयतिलक श्यामलिम्ना[12]ऽनुलिप्ता-
न्याभासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥ ४ ॥
सर्वदा सर्वदोऽसीति मिथ्या संस्तूयसे जनैः ।
नाऽरयो[13] लेभिरे पृष्ठं न वक्षः[14] परयोषितः ॥ ५ ॥

---

१ दारिद्र्यात् २ अवमानितः ३ सदृशः ४ दरिद्रो भवति ५ पिता जनक-राजश्च ६ उपमातुः पृथ्व्याश्च ७ शेषः जारश्च ८ त्रयो दोषाः आध्यात्मिकाधि-भौतिकाधिदैविकाः ९ चत्वारो दोषा यस्य तथाविधं पक्षे चतुर्हस्तं विष्णुस्वरूपं कर्तुमित्यर्थः १० कलंकः ११ दिग्गजानाम् १२ नीलिम्ना १३ वैरिणः १४ उरःस्थलम् ।

# सेवकनिन्दा ।

श्रीः ॥ आहारे वडवा[1]ऽनलश्च शयने यः कुम्भकर्णायते
संदेशे[2] बधिरः पलायनविधौ सिंहः शृगालो[3] रणे ।
अन्धो वस्तुनिरीक्षणेऽथ गमने खञ्जः[4] पटुः क्रन्दने[5]
भाग्येनैव हि लभ्यते पुनरसौ सर्वोत्तमः सेवकः ॥ १ ॥
प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ २ ॥
जीवन्तोऽपि मृताः पञ्च व्यासेन परिकीर्तिताः ।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ ३ ॥
शिरसा धार्यमाणोऽपि सोमः सौम्येन शम्भुना ।
तथाऽपि कृशतां धत्ते कष्टः खलु पराऽऽश्रयः ॥ ४ ॥
वरं वनं वरं भैक्ष्यं[6] वरं भारो[7]पजीवनम् ।
पुंसां विवेकहीनानां सेवया न धनाऽर्जनम् ॥ ५ ॥
सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वाऽऽयत्तत्वं[8] शरीरस्य मूढैस्तदपि हारितम्[9] ॥ ६ ॥

सर्वः कल्पे[10] वयसि यतते लब्धुमर्थान्कुटुम्बी
पश्चात् पुत्रैरुपहितभरः कल्पते[11] विश्रमाय ।
अस्माकं तु प्रतिदिनमियं सादयन्ती प्रतिष्ठां
सेवाकाकुः परिणतिरभूत्स्त्रीषु कष्टोऽधिकारः ॥ ७ ॥
स्वाऽभिप्रायपरोक्षस्य परचित्ताऽनुवर्तिनः ।
स्वयं विक्रीतदेहस्य सेवकस्य कुतः सुखम् ॥ ८ ॥
चलेषु स्वामिचित्तेषु सुलभे पिशुने[12] जने ।

---

१ वाडवाग्निः २ वार्ताहरणे ३ 'कोल्हा' इति लोके. ४ पादविकलः ५ रोदने ६ भिक्षा ७ भारवाहकत्वेनोपजीवनम् ८ स्वाधीनत्वम् ९ नाशितम् १० प्रथमे ११ योग्यो भवति १२ सूचके।

यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ ९ ॥
सेवाश्ववृत्तिर्यैरुक्ता न तैः सम्यगुदाहृतम् ।
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क सेवकः ॥१०॥

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
धृष्टः पार्श्वे वसति च सदा दूरतस्त्वप्रगल्भः ।
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाऽभिजातः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ ११ ॥

द्रव्यं जहाति सेवकः सुखं च मानमेव च ।
यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १२ ॥

## भिक्षुकगुणाः ।

श्रीः॥ उच्चैरध्ययनं पुरातनाकथाः स्त्रीभिः सहाऽऽलापनं
तासामर्भकलालनं पतिनुतिस्तत्पाकमिथ्यास्तुतिः ।
आदेशस्य कराऽवलम्बनविधिः पाण्डित्यलेखक्रिया
होरागारुडमन्त्रतन्त्रकविधिर्भिक्षोर्गुणा द्वादश ॥ १ ॥

प्रातःक्षालितलोचनाः करतले चञ्चत्पवित्रांकुरा-
स्तत्तत्स्थाननिवेशितोर्ध्वतिलकाश्चैलान्तबद्धाऽक्षताः ।
को जातश्च मृतोऽथ वा मृततिथिः कस्याऽऽलये वर्तते
चेत्थं हर्षशतैर्युताः प्रतिदिनं धावन्त्यहो भिक्षुकाः ॥ २ ॥

अग्र्यो भुक्तिमतां प्रयोगसमये मन्त्रेषु पृष्ठं गतः
पाकाऽगारगतस्तु पाचकमनस्तोषाय वाचस्पतिः ।
उच्छायां निरतो रतोऽर्भकगणे पिण्डेषु दत्ताऽऽदरो
नानाश्राद्धगणैकचालितमना भट्टोत्तमो राजते ॥ ३ ॥

---

१ सेवकाः २ विक्रीताः असवः प्राणा येन सः ३ बहुभाषकः ४ 'धीट' इति लो० ५ असमंजस ६ भयशीलः ७ 'दांडगा' इ० ८ इच्छाति ९ पठनम् १० शिशुः ११ स्तुतिः १२ प्रश्नकथनम् १३ वस्त्रान्ते १४ अग्रगण्यः १५ भोक्तृणाम् १६ बृहस्पतिः १७ दक्षिणायाम् अयं तु वैदिकानां सांकेतिकः शब्दः।

# वाग्वर्णनम् ।

श्रीः ॥ केयूरा[1] न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला[2]
न स्नानं न विलेपनं न कुसुमं नाऽलङ्कृता[3] मूर्धजाः[4] ।
वाण्येका समलंकरोति[5] पुरुषं या[6] संस्कृता धार्यते ।
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १ ॥

मातर्नाऽतः परमनुचितं यत्खलानां पुरस्ता-
दस्ताऽऽ शङ्कं जठरपिठरी[7]पुर्तये नर्तितासि ।
तत्क्षन्तव्यं सहजसरले वत्सले वाणि कुर्यां
प्रायश्चित्तं गुणगणनया गोपवेषस्य[8] विष्णोः ॥ २ ॥

अपि ललितसुगुणवेणिः[9] सांऽलंकाराऽपि[10] या सुवर्णाऽपि[11] ।
रघुतिलकविहीना[12] चेद्वाणी रमणीय नैव कल्याणी[13] ॥ ३ ॥

कामान्[14] दुग्धे विप्रकर्षत्यलक्ष्मीं[15][16]
कीर्तिं सूते दुष्कृतं याहिनस्ति ।
तां चाऽप्येतां मातरं मङ्गलानां
धेनुं धीराः सूनृतां[17] वाचमाहुः ॥ ४ ॥

तव करकमलस्था स्फाटिकीम्[18] अक्षमालां[19]
नखकिरणविभिन्नां[20] दाडिमीबीजबुद्धया ॥ ५ ॥

---

१ बाहुभूषणानि २ चन्द्रवदुज्ज्वलाः ३ सुगंधतैलादिना संस्कृताः ४ केशाः । ५ सम्यगलंकरोति ६ या असंस्कृतेति पदच्छेदपक्षे समलं मलसहितम् ७ उदरभाण्डम् ८ गोपवेषधारिणः कृष्णस्य ९ ललिता सुन्दरा सुष्टुगुणयुक्ता वेणिः प्रवाहो यस्याः . पक्षे ललिताशोभनगंगावनादिसुमयुक्ता वेणिः केशपाशो यस्याः १० श्लेषरूप-काद्य[illegible]युक्ता, पक्षे सौवर्णहारकाद्यलंकारयुक्ता ११ सुष्टु वर्णाः यस्यां, पक्षे शोभनगौर[illegible] १२ रघुतिलकोरामस्तद्वर्णनविहीना वाणी १३ मंगला, रलयोः सावर्ण्याद्रघुतिलके[illegible] [illegible]तिलकेनविहीनारमणी स्त्री विधवेत्यर्थः १४ मनोरथान् १५ अपनयति १६ [illegible] १९ जपमालाम् २० नखानां किरणैर[illegible] १७ सत्याम् १८ स्फटिकमयीम्

अनुलेंवमनुकर्षन् येन कीरो निषिद्धः
स भवतु मम भूत्यै वाणि ते मन्दहासः ॥ ६ ॥
गानाब्धेस्तु परं पारं नोपैर्याय सरस्वती।
अतो निमज्जनभयात्तुम्बीं वहति वक्षसि ॥ ७ ॥
या कर्षति निजयोगादन्तर्गतजीवनानि सरसानां ।
वाणी सैव गुणवती घटीव यद्वा वधूटीव ॥ ८ ॥
अस्त्यद्याऽपि चतुःसमुद्रपरिखापर्यन्तमुर्वीतलं
वर्तन्तेऽपि च तत्र तत्र रसिका गोष्ठीषु सक्ता नृपाः ।
एकस्तत्र निरादरो भवति चेदन्यो भवेत्साऽऽदरो
वाग्देवीवदनाम्बुजे वसति चेत्को नाम दीनो जनः॥९॥
तास्तु वाचः सभायोग्या याश्चित्ताऽऽकर्षणक्षमाः ।
स्वेषां परेषां विदुषां द्विषामविदुषामपि ॥ १० ॥
इयं पुण्याब्धिकन्यैव मन्ये वाक्चातुरी छलात् ।
वृणोति विबुधान् हित्वा पुरुषोत्तममेव यत् ॥ ११ ॥
न धनी न बली नापि शूरो न गुणवानपि ।
तथा भाति यथा वक्ता सभायां पिकवद्वने ॥ १२ ॥
यस्य वाण्यस्ति मधुरा तस्यैव सफलं तपः ।
नोचेज्जीवन्ति पशवोप्यनिशं पुष्टिशालिनः ॥ १३ ॥
सालंकारोपि सरसः सगुणोपि पुमानिह ।
प्रबन्ध इव वक्तृत्वं विना नूनं जडो न किम् ॥ १४ ॥
वाचः सौष्ठवमावेक्ष्य सुधाप्रायः सुधाभवत् ।
सुधाधरोपि नोतद्वद्वाग्मी द्विजमुदे यथा ॥ १५ ॥

---

१ प्रतिक्षणम् २ शुकः ३ समृद्ध्यै ४ मन्दहास्यम् ५ ...गानसमुद्रस्य ६ ...काः कुर्वन्वीति प्रसिद्धम् ...म प्राभवती ७ इक्ष्वाकुफलम् जलतरणार्थं ...कूपादीनांच ८ हृतानि जीवनानि ... १२ 'खंदक' इति लोके १३ सरस्वती। १० प्रागल्भ्या... ...दिगणः—

## वाग्मिप्रशंसा ।

श्रोतॄन्मूकयति ब्रुवन् स्थिरतमं कुर्वन्नमीषां मनो
निर्वाप्यः परवाप्यकृत्परदृशामेकाऽऽश्रयो नाऽन्यदृक् ।
यस्त्यक्ताऽङ्गविकम्पनः प्रचलयन्नित्यं सतां मस्तकं
क्षीरं श्रोतृषु मुख्यमात्मनि गुणं धत्ते स वक्तोत्तमः ॥१॥
तद्वक्ता सदसि ब्रवीतु वचनं यच्छृण्वतां चेतसः
प्रोल्लासं रसपूरणं श्रवणयोरक्ष्णोर्विकासश्रियम् ।
क्षुन्निद्राश्रमदुःखकालगतिहृत् कार्यान्तरप्रस्मृतिं
प्रोत्कण्ठामनिशं श्रुतौ वितनुते शोकं विरामादपि ॥ २ ॥
श्रुतिसिद्धान्तशूरस्य तद्विरुद्धान्निरुन्धतः ।
वल्गितं वावदूकस्य कृतिनः किं न शोभते ॥ ३ ॥
अल्पाऽक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी ।
बहुवचनमल्पसारं यः कथयति विप्रलापी सः ॥ ४ ॥
शुद्धकांस्यरचिताऽपि लालिता जिह्वया यदि न योजिता भवेत् ।
किं तया करणमस्ति घण्टया जिह्वया ध्वनिमतां हि पूज्यया ॥५॥

## असत्यवादिनिन्दा ।

श्रीः ॥ यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं
निदानं दुःखानां यदवनिरुहाणामिव जलम् ।
न यत्र स्याच्छायाऽऽतप इव तपःसंयमकथा
कथंचित्तन्मिथ्यावचनमभिधत्ते न मतिमान् ॥ १ ॥
जिह्वैकैव सतामुभे फणवतां स्रष्टुश्चतस्रश्च ता-
स्ताः सप्तैव विभावसोर्नियमिताः षट् कार्तिकेयस्य च ।

---

१ वक्ता २ मूकान् करोति ३ अचलं तदस्यामिति यावत् ४ प्रकर्षेणोल्लासं विकासम् ५ रसानां शृंगारादीनां पूरणम् ६ अन्यकार्यविस्मृतिम् ७ वक्तुः ८ ने. श्री. नेवक इति वा प्रतिज्ञया ९ कर्तव्यं न किंचित्कार्यमस्तीति भावः १० दावाग्नेः ११ आदिकारणम् १२ वृक्षाणाम् १३ यस्मिन् १४ सर्पाणाम् १५ ब्रह्मणः १६ अग्नेः ।

पौलस्त्यस्य दशाऽभवन् फणिपतेर्जिह्वासहस्रद्वयं
जिह्वालक्षशतैककोटिनियमो नो दुर्जनानां मुखे ॥ २ ॥
असत्यमप्रत्यय[3]मूलकारणं कुवासनासद्मसमृद्धिवारणम् ।
विपन्निदानं परवञ्चनोर्जितं कृताऽपराधं कृतिभिर्विवर्जितम् ३
नाऽसत्यवादिनः सख्यं न पुण्यं न यशो भुवि ।
दृश्यते नाऽपिकल्याणं कालकूट[6]मिवाऽश्नतः ॥ ४ ॥

## अविवेकनिन्दापूर्वकविवेकस्तुतिः ।

श्रीः ॥ कदापि साहसं नैव कर्तव्यं पुरुषैर्यतः ।
जीवितस्यापि नाशः स्यात्तस्यैव कृपया किल ॥ १ ॥
स्वल्पं महद्वा यत्कर्म विचार्यैव तदाचरेत् ।
अविचारेण नाचारस्तिरश्चामपि दृश्यते ॥ २ ॥
विवेकस्यैव दास्यस्ताः सकला अपि संपदः ।
निखिलास्तारका यद्वच्छरद्राका कलानिधेः ॥ ३ ॥
अहो विवेकराजस्य कृपयैवाखिला नराः ।
संसारवारांनिधिमप्युत्तरन्त्येव तत्क्षणात् ॥ ४ ॥
अविवेकिनमालोक्य तथा खिद्यति मे मनः ।
कुम्भीपाकादिनरकानुभवैरपि नो यथा ॥ ५ ॥

## कृतघ्ननिन्दा ।

श्रीः ॥ व्योमनि शं वा कुरुते चित्रं निर्माति यत्नतः सलिले ।
स्नपयति पवन सलिलैर्यस्तु खले चरति सत्कारम् ॥ १ ॥
यथा वृष्टिः समद्रेषु भुक्तस्योपरि भोजनम् ।
एवं प्रीतिः खलैः सार्धमुत्पन्नाऽप्यवसीदति ॥ २ ॥
शोकं मा कुरु कुक्कुर सत्त्वेष्वहमधम इति मुधा साधो ।
कष्टादपि कष्टतरं दृष्ट्वा श्वानं कृतघ्ननामानम् ॥ ३ ॥

---

१ रावणस्य २ शेषस्य ३ अविश्वासः ४ विपत्तेः कारणम् ५ कुशलैः ६ विषम् । ७ भक्षयतः ८ सुखम् ९ आकाशम् १० पूजाम् ११ मशकः १२ स्वर्णम् ।

## गर्भवासप्रयुक्तं दुःखम् ।

श्रीः ॥ कृमिभिः क्षतसर्वाङ्गः सौकुमार्यात्प्रतिक्षणम् ।
मूर्छामाप्नोत्युरुक्लेशो गर्भस्थैः क्षुधितैर्भृशम् ॥ १ ॥
कटुतीक्ष्णोष्णलवणक्षाराऽम्लादिभिरुल्बणैः ।
मातृभुक्तैरुपस्पृष्टः सर्वाङ्गोत्थितवेदनः ॥ २ ॥
उल्बेन संवृतस्तस्मिन्नान्त्रैश्च बहिरावृतः ।
आस्ते कृत्वा शिरः कुक्षौ भुग्नपृष्ठशिरोधरः ॥ ३ ॥
अकल्पः स्वाङ्गचेष्टायां शकुन्त इव पञ्जरे ।
अनुच्छ्वसन् स्मरन् पूर्वं गर्भे किं नाम विन्दते ॥ ४ ॥
निःसृतोऽहं करिष्यामि सुकृतानीति चिन्तयन् ।
मेदोऽसृग्दिग्धसर्वाऽङ्गो जरायुपुटसंवृतः ॥ ५ ॥
निष्क्रामन् भृशदुःखाऽऽर्तो रुदन्नुच्चैरधोमुखः ।
यन्त्रादिव विनिर्मुक्तः पतत्युत्तानशाय्यथ ॥ ६ ॥

## स्त्रीस्वभावनिन्दा ।

श्रीः ॥ अनृतं साहसं माया मूर्खत्वमतिलोभता ।
अशुचित्वं निर्दयत्वं स्त्रीणां दोषाः स्वभावजाः ॥ १ ॥
स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ।
घ्नन्त्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ २ ॥
स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥ ३ ॥

---

१ कीटकैः । २ महाकष्टयुक्तः । ३ उत्कटैः । ४ जरायुणा 'जार' इति लोके । ५ वसया । ६ असमर्थः । ७ चलनादिव्यापारे । ८ पक्षीव । ९ उच्छ्वासं त्यक्तुं न शक्नुवन् । १० शोभनानि कर्म । ११ गर्भाशयाच्च्युतः । १२ मेदोरक्तालिप्तसर्वाङ्गः । १३ जरायु-[illegible] । १४ बहिर्निःसरन् । १५ निःसरणकालेऽत्यन्तदुःखयुक्तः । १६ उच्चस्वरेण रोदनं कुर्वन् । १७ उत्तानः शेतेऽसौ उत्तानशायी । १८ असत्यम् । १९ कपटम् । २० दुष्टाः । २१ स्वभावतः ।

विधायाऽलीकविश्रम्भमज्ञेषु त्यक्तसौहृदाः।
नवंनवमभीप्सन्त्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ४ ॥

स्वातन्त्र्यं पितृमन्दिरं च वसतिर्यात्रोत्सवे संमति-
र्गोष्ठी पूरुषसंनिधाननियमो वासो विदेशे तथा।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्धकमीर्ष्यितं प्रवसनं नाशस्य हेतुः स्त्रियाः॥ ५ ॥

ज्योत्स्नेव नयनाऽऽनन्दः सुरेव मदकारणम्।
प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी ॥ ६ ॥

अग्राह्यं हृदयं तथैव वदनं यद्दर्पणाऽन्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते।
चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं
नारी नाम विषांकुरैरिव लता दोषैः समं वर्धिता ॥७॥

गुणाऽऽश्रयं कीर्तियुतं च कान्तं पतिं विधेयं सघनं रतिज्ञम्।
विहाय शीघ्रं वनिता व्रजन्ति नरान्तरं शीलगुणादिहीनम् ॥८॥

समुद्रवीचीव चलस्वभावाः संध्याऽभ्रलेखेव मुहूर्तरागाः।
स्त्रियो हृताऽर्थाः पुरुषं निरर्थं निष्पीडितालक्तकवत्त्यजन्ति॥९॥

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ १० ॥

नाऽमृतं न विषं किंचिदेकां मुक्त्वा नितम्बिनीम्।
सैवाऽमृतलतारक्ता विरक्ता विषवल्लरी ॥ ११ ॥

---

१ कपटविश्वासम्। २ जारिण्यः। ३ स्वेच्छाप्रमयः। ४ समागमः। ५ प्रवास-। ६ मद्यमिव। ७ चित्ताभिप्रायः। ८ पर्वतस्थसूक्ष्ममार्गवदतिकठिनः। ९ कमलपत्रगतजलबिन्दुवच्चञ्चलम्। १० तरंगः। ११ सायंतनाभ्रमिव क्षणमनुरागिण्यः। १२ निष्पीडितलाक्षारसरञ्जितकार्पासवत्।

अनंकुरितकूर्चकः स तु सितोपलाऽऽढ्यं पयः
स एव धृतकूर्चकः सलवणाऽम्बुतक्रोपमः ।
स एव सितकूर्चकः क्वथितगुग्गुलोद्वेगकृत्
भवन्ति हरिणीदृशां प्रियतमेषु भावास्त्रयः ॥ १२ ॥
जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमम् ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ १३ ॥
स्त्रीणां द्विगुण आहारो लज्जा चाऽपि चतुर्गुणा ।
साहसं षड्गुणं चैव कामश्चाऽष्टगुणः स्मृतः ॥ १४ ॥
अन्तःक्रूराः सौम्यमुखा अगाधहृदयाः स्त्रियः ।
अन्तर्विषा बहिःसौम्या भक्ष्या विषकृता इव ॥ १५ ॥
स्त्रियो हि मूलं निधनस्य पुंसः स्त्रियो हि मूलं व्यसनस्य पुंसः ।
स्त्रियो हि मूलं नरकस्य पुंसः स्त्रियो हि मूलं कलहस्य पुंसः १६
कामनाम्ना किरातेन वितता मूढचेतसाम् ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ १७ ॥
दर्शनाद्धरते चित्तं स्पर्शनाद्धरते धनम् ।
सङ्गमाद्धरते सत्त्वं नारी प्रत्यक्षराक्षसी ॥ १८ ॥

## कुलवधूवृत्तम् ।

श्रीः ॥ यस्य भार्या शुचिर्दक्षा भर्तारमनुगामिनी ।
नित्यं मधुरवक्त्री च सा रमा न रमा रमा ॥ १ ॥
नित्यं स्नाता सुगन्धा च नित्यं च प्रियवादिनी ।
अल्पभुङ् मितवक्त्री च देवता सा न मानुषी ॥ २ ॥

---

१ अनुद्गतश्मश्रुः । २ खण्डशर्करायुक्तं दुग्धमिव सुखावहः । ३ सितकूर्चवत्त्व स्त्रीणां क्वथितगुग्गुलवदुद्वेगजनको न कथमपि संतोषजनक इत्यर्थः क्वथितगुग्गुलुक्वाथवदिति वा पाठः । ४ सह । ' बरोबर ' । ५ मरणस्य । ६ दुःखस्य । ७ विस्तृत । ८ प्रसृताः ९ नरा एव विहंगाः पक्षिणस्तेषाम् । १० पाशाः । ११ बलं । १२ पवित्रा । १३ लक्ष्मीः ।

अमारभूते संसारे सारभूता नितम्बिनी ।
इति संचिन्त्य वै शम्भुरर्धाङ्गे पार्वतीं दधौ ॥ ३ ॥

कार्येषु मन्त्री करणेषु दासी भोज्येषु माता शयनेषु रम्भा ।
धर्माऽनुकूला क्षमया धरित्री भार्या च षाड्गुण्यवतीह दुर्लभा ४

पदन्यासो गेहाद्बहिरहिफणाऽऽरोपणसमो
निजाऽऽवासादन्यद्भवनमपरद्वीपतुलितम् ।
वचो लोकाऽलभ्यं कृपणधनतुल्यं मृगदृशः
पुमानन्यः कान्ताद्विधुरिव चतुर्थीसमुदितः ॥ ५ ॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ ६ ॥

जीवति जीवति नाथे मृते मृता या मुदा युता मुदिते ।
सहजस्नेहरसाला कुलवनिता केन तुल्या स्यात् ॥ ७ ॥

भक्तिः प्रेयसि संश्रितेषु करुणा श्वश्रूषु नम्रं शिरः
प्रीतिर्यातृषु गौरवं गुरुजने क्षान्तिः कृताऽऽगस्यपि ।
अम्लाना कुलयोषिता व्रतविधिः सोऽयं विधेयः पुन-
र्मद्भर्तुर्दयिता इति प्रियसखी बुद्धिः सपत्नीष्वपि ॥ ८ ॥

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता
तत्पादाऽर्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।
सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति
प्राच्यैः पुत्रि निवेदितः कुलवधूसिद्धान्त धर्माऽऽगमः ॥ ९ ॥

लज्जावशाच्च नतमंथरदृष्टिपातं यैश्चुम्बितं कुलवधूवदनाऽरविन्दम् ।
तेषामनेकपुरुषव्रणिताधरेषु शक्तिः कथं भवति वेशवधूमुखेषु १०

---

१ सर्वः । २ स्वगृहात् । ३ कान्तास्त्रियाः अन्यः पुमान् चतुर्थीचन्द्र इव दर्शनानर्ह इत्यर्थः । ४ हर्षिते । ५ स्वाभाविकस्नेहभरिता ६ कुलस्त्री । ७ भर्तरि ८ आश्रितेषु । ९ ' जाया ' इति० १० क्षमा । ११ अपराधिनि । १२ प्रफुल्लवदना । १३ ' सपत्नीषु ' १४ पूजा । १५ त्यजेत् ।

सैव साध्वी सुभकश्च सुस्नेहः सरसोज्ज्वलः ।
पाकः संजायते यस्याः करादप्युदरादपि ॥ ११ ॥

दीपदशा कुलयुवती वैदग्ध्येनैव मलिनतामेति ।
दोषा अपि भूषायै गणिकायाः शशिकलायाश्च ॥ १२ ॥

रूपसंपन्नमग्राम्यं प्रेमप्रेष्यं प्रियंवदम् ।
कुलीनमनुकूलं च कलत्रं कुत्र लभ्यते ॥ १३ ॥

# असतीचरितम् ।

श्रीः ॥ यस्य भार्या विरूपा च कश्मला कलहप्रिया ।
अधिकाऽधिकभक्षा च सा जरा न जरा जरा ॥ १ ॥

विवादशीलां स्वयमर्थचोरिणीं
पराऽनुकूलां बहुपाकपाकिनीम् ।
आक्रोशिनीं दुर्विषहप्रकोपिनीं
त्यजन्ति भार्यां दशपुत्रमातरम् ॥ २ ॥

भर्ता यद्यपि नीतिशास्त्रनिपुणो विद्वान्कुलीनो युवा
दाता कर्णसमः प्रसिद्धविभवः शृङ्गारदीक्षागुरुः ।
स्वप्राणाऽधिककल्पिता स्ववनिता स्नेहेन संलालिता
तं कान्तं प्रविहाय सैव युवती जारं पतिं वाञ्छति ॥ ३ ॥

पतिरतीव धनी सुभगो युवा परविलासवतीषु पराङ्मुखः ।
शिशुरलंकुरुते भवनं सदा तदपि सा मुदती रुदती कुतः ॥ ४ ॥

आरोपिता शिलायामश्मेव त्वं भवेति मन्त्रेण ।
मयाऽपि परिणयाऽऽपदि जारमुखं वीक्ष्य हसितैव ॥ ५ ॥

---

१ पक्वान्नं । पक्षे बालकः २ दीपवर्तिः ३ विशेषेण दग्धा विदग्धा तस्या भावो वैदग्ध्यं तेन पक्षे चातुर्येण । ४ सदोषतां मलिनत्वं च । ५ दूषणानि रात्रिश्च ६ सौन्दर्यपूर्णम् । ७ ग्राम्यं न भवतीत्यग्राम्यं सद्व्यवहारचतुरम् ८ प्रेमबहुलम् । ९ मधुरभाषि । १० कुटुम्बम् । ११ अमंगला । १२ वृद्धत्वम् । १३ उपदेष्टा । १४ सुन्दरः अथ च सुष्ठु भं नक्षत्रं तस्मिन् गच्छति. कुयोगं त्यक्त्वा भार्या प्रवासि-हृदयेन रोदनकारणम् । १५ स्थापिता । १६ परिणयरूपायामापदि संकटे ।

आः पाकं न करोषि पापिनि कथं पापी त्वदीयः पिता ।
रण्डे जल्पसि किं तवैव जननी रण्डा त्वदीया स्वसा[1] ।
निर्गच्छ त्वरितं गृहाद्बहिरितो नेदं त्वदीयं गृहं
हाहा नाथ ममाऽद्य देहि मरणं जारस्य भाग्योदयः ॥ ६ ॥

पाणौ गृहीताऽपि पुरस्कृताऽपि स्नेहेन[2] नित्यं परिवर्धिताऽपि ।
परोपकाराय भवेदवश्यं वृद्धस्य भार्या करदीपिकेव ॥ ७ ॥

वयं बाल्ये[3] बालांस्तरुणिमनि[4] यूनः परिणता-
वपीच्छामो[6] वृद्धान् परिणयविधौ नः स्थितिरियम् ।
त्वचाऽऽरब्धं जन्मक्षपयितुमनेनैकपतिना
न मे गोत्रेपुत्रि क्वचिदपि सतीलाञ्छनमभूत् ॥ ८ ॥

कार्ये सत्यपि जातु याति न बहिर्नाऽप्यन्यमालोकते
साध्वीरप्यनुकुर्वती गुरुजनं श्वश्रूं च शुश्रूषते ।
विश्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुन-
र्निद्राणे सकले जने शशिमुखी निर्याति रन्तुं विटैः ॥ ९ ॥

एषैव योषितां धन्या शीलं च लभते सुखम् ।
दिवा पतिव्रता भूयो नक्तं च कुलटा यतः ॥ १० ॥

कुलपतनं[13] जनगर्हां[14] बन्धनमपि जीवितस्य संदेहम् ।
अङ्गीकरोति सकलं वनिता परपुरुषसंसक्ता ॥ ११ ॥

ब्रह्मैव सत्यमखिलं नहि किंचिदस्ति
तस्मान्न मे सखि पराऽवरभेदबुद्धिः ॥
जारे तथा निजवरे सदृशोऽनुरागो
व्यर्थं किमर्थमसतीति कदर्थयन्ति ॥ १२ ॥

---

१ भगिनी । २ प्रीत्या तैलेन च । ३ बाल्यावस्थायाम् । ४ तारुण्ये । ५ वार्धक्ये ६ इच्छाविषयान् कुर्मः । ७ कदाचित् । ८ अनुकरणं कुर्वाणा । ९ विश्वासम् । १० शयने । ११ क्रीडितुम् । १२ जारैः । १३ भ्रष्टताम् । १४ निन्दाम् ।

सखि शून्यगृहेऽप्यवकाशे प्राप्तः प्रेयान् यथा तथा न गृहे ।
वातादवारितादपि भवति गवाक्षाऽनिलः शीतः ॥ १३ ॥

नाऽम्बुमैनं कुमुदरुपमेयं स्वैरिणीनयनपङ्कजयुग्मम् ।
नोदये दिनकरस्य नचेन्दोः केवलं तमसि यस्य विकासः ॥१४॥

तुलामारुह्य रविणा वृश्चिके निहितं पदम् ।
त्वया तु शिरसि न्यस्तमयत्नेनैव भोगिनाम् ॥ १५ ॥

आकारेण शशी गिरा च परभृत् पारावतश्चुम्बने
हंसश्चङ्क्रमणे समं दयितया रत्यां प्रमत्तो गजः ।
इत्थं भर्तरि मे समस्तयुवतिश्लाघ्येऽपि नो रोचते
मद्भाग्येन विवाहितः पतिरिति स्यान्नैकदोषो यदि ॥१६॥

दृशा किंचित्किंचिच्चलितभुजलीलाविलसितैः
कराऽऽघातैः किंचिन्नखविलिखितैः किंचिदधिकम् ।
स्पृशन्त्यः संबाधे गुरुभिरनभिप्रेक्षितपथे
यथेष्टं चेष्टन्ते स्फुटकुचतटाः पश्य कुलटाः ॥ १७ ॥

पर्यङ्कः स्वास्तरणः पतिरनुकूलो मनोहरं सदनम् ।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्यरतिलुब्धाः ॥ १८ ॥

दुर्दिवसे घनतिमिरे दुःसंचारासु नगरवीथीषु ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १९ ॥

दृष्टिं हे प्रतिवेशिनि क्षणमिहाऽप्यस्मद्गृहे दास्यसि
प्रायेणाऽस्य शिशोः पिता न विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाऽऽकुलं
नीरन्ध्राः स्तनमालिखन्तु जठरच्छेदानलग्रन्थयः ॥ २० ॥

१ अवसरे । २ उपमातुंयोग्यम् । ३ सर्पाणां कामिनां च । ४ कोकिलः ५ गमने
६ जनसंमर्दे । ७ व्यापारंकुर्वते । ८ स्वैरिण्यः । ९ दुर्दिने । १० 'खेजारीण' इ०
११ कूपसंबन्धिनीः ।

इह वटवृक्षे यक्षः प्रतिवसति दिवाऽपि यत्र भयशङ्का ।
तस्मिन्नभिनववध्वा नीता वीतोदयाः क्षणदाः[1] ॥ २१ ॥
आयातासि विमुञ्च वेपथुभरं दृष्टासि केनापि नो
नीलं चोलमिदं विमुञ्च हरतु स्वेदं निशीथानिलः ।
इत्यन्तर्भयसन्नकण्ठमसकृद्यामीति तल्पंगता
त्रस्यन्ती परिरभ्यते सुकृतिभिः स्वैरं नवस्वैरिणी ॥२२॥

## सामान्यता पुत्रप्रशंसा ।

श्रीः ॥ गृहे जानुचरः[2] केल्यां मुग्धस्मितमुखाऽम्बुजः ।
पुत्रः पुण्यवतामेव पात्रीभवति नेत्रयोः ॥ १ ॥
स्वगर्भशुक्तिनिर्भिन्नं सुवृत्तं सुतमौक्तिकम् ।
वंशश्रीतिलकीभूतं मन्दभाग्यस्य दुर्लभम् ॥ २ ॥
वर्धते न चिरं लोके वंशलक्ष्मीरसन्ततिः[3] ।
स्वल्पाऽवशेषितस्नेहवर्तिमालेव दीपिका ॥ ३ ॥
अन्तःकरणतत्त्वस्य दम्पत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ॥ ४ ॥
आनन्दस्रुतिरात्मनोनयनयोरन्तः सुधाऽभ्यञ्जनं
प्रस्तारः प्रणयस्य मन्मथतरोः पुष्पं प्रसादो रतेः ।
आलानं[4] हृदयद्विपस्य विषयाऽरण्येषु संचारिणो-
र्दंपत्योरिह लभ्यते सुकृततः संसारसारः सुतः ॥ ५ ॥
दिग्वाससं[5] गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्याऽधिका हि पश्यन्ति गङ्गाधरमिवाऽऽत्मजम् ॥ ६ ॥
उरोरुहात्[6] दुद्गमितैः पयोभिरापूर्य केल्या निजमास्यगर्भम् ।
फूत्कृत्य मातुर्वदने हसन्तं तनूभवं पश्यति कोऽपि धन्यः ७
कृतचङ्क्रमपङ्गणेषु किंचित्कणत्किङ्किणिरिङ्गदंघ्रिपद्मम् ।

---

१ रात्रयः । २ जानुभ्यां चरतीति जानुचरो रिंगमाण इत्यर्थः । ३ सन्ततिर-हिता । ४ बन्धनस्तम्भः । ५ नग्नम् । ६ स्तनात् ।

यदि सन्महितं सुतं श्रितं स्यात्तदिदं सद्म हितं भवेत्तदानीम् ॥ ८ ॥
अहं किमम्बा किमभीष्टेनापदे तवेति मातुर्धुरि तात पृच्छया ।
प्रलोभ्यतुल्यं प्रवदन्नमर्भकं मुदा हसन् जिघ्रति मूर्ध्नि पुण्यभाक् ९
निन्द्यते पितृभिस्तैस्तैर्निरपत्यधनः पुमान् ।
अध्वनीनैरति श्रान्तैरवकेशीव पादपः ॥ १० ॥

## विषयनिन्दान्तर्गतपुत्रनिन्दा ।

श्रीः ॥ नानाशरीरकष्टैर्धनव्ययैः साध्यते यदा पुत्रः ।
उत्पन्नमात्रपुत्रे जीवितशङ्का गरीयसी तत्र ॥ १ ॥
जीवन्नपि किं मूर्खः प्राज्ञः किं शीलवान् भविता ।
जारश्चोरः पिशुनः पतितो द्यूतप्रियश्चापि ॥ २ ॥
पितृमातृबन्धुघाती मनसः खेदाय जायते पुत्रः ।
चिन्तयति तातनिधनं पुत्रो द्रव्याद्यधीशताहेतोः ॥ ३ ॥
सर्वगुणैरुपपन्नः पुत्रः कस्यापि कुत्रचिद्भवति ।
सोल्पायू रुग्णो वा ह्यनपत्यो वा तथापि खेदाय ॥ ४ ॥
पुत्रात्सद्गतिरिति चेत्तदपि प्रायोस्ति युक्त्यसहम् ।
नापुत्रस्य लोकोस्तीति श्रुत्या को वा प्रभाष्यते लोकः ॥ ५ ॥

## विषयनिन्दान्तर्गतसुहृन्निन्दा ।

श्रीः ॥ तावत्सर्वे सुहृदो व्यत्ययतः शत्रवः सर्वे ।
अश्नन्ति चेदनुदिनं बन्दिन इव वर्णयन्ति संतृप्ताः ॥ १ ॥
नचेद्द्वित्रिदिनान्तरमभिनन्दन्तः प्रकुप्यन्ति ।
दुर्भरजठरनिमित्तं समुपार्जयितुं प्रवर्तते चित्तम् ॥ २ ॥

## सत्पुत्रप्रशंसा ।

श्रीः ॥ एकोऽपि गुणवान् पुत्रो निर्गुणैः किं शतेन वैः ।
एकश्चन्द्रो जगच्चक्षुर्नक्षत्रैः किं प्रयोजनम् ॥ १ ॥

---

१ माता । २ इष्टस्थाने । ३ प्रलोभ्यस्य प्रलोभनार्थं दर्शितस्य वस्तुनोऽनुरूपम्
४ अवघ्राणं करोति । ५ पान्थैः । ६ वन्ध्यः ।

